# SĀRASWATA-ŚATAKAM

(CITRA-KAVYAM)

BY

SRI SRIJIVA NYAYATIRTHA, M.A.

*Ex-Lecturer, Calcutta University; Principal, Bhatpara Sanskrit College.*



CALCUTTA UNIVERSITY

1965

Published by
SIBENDRANATH KANJILAL
Superintendent, Calcutta University Press,
48, Hazra Road,
Calcutta-19.

Printed at
ART UNION PRINTING WORKS PRIVATE LTD.
165, Sri Arabinda Sarani,
Calcutta-6.

॥ श्रीः ॥

विशद्ध टीकाभूमिकासहितं

# सारस्वत-शतकम्

( चित्र काव्यम् )

कलिकाता-विश्वविद्यालयाध्यापकचर-भट्टपल्लीसंस्कृतविद्यालयाध्यक्ष
श्री श्रीजीवन्यायतीर्थ—विरचितम्



कलिकाता-विश्वविद्यालयः

मूल्यम्—विंशतिरूप्यकमितम्

# FOREWORD

It is a matter of self-gratification that my humble work 'Saraswata-Satakam', a book of hundred and eight poems with a commentary on it both written in Sanskrit and an introduction entitled 'The origin, growth and development of Citra Kavya in Sanskrit literature' in three languages (Sanskrit, Bengali and English) have been published through the benevolent desire of the authorities of the Calcutta University, and the University Grants Commission.

I offer my hearty thanks and gratefulness to Sri Satis Chandra Ghose, M.A., Treasurer of the University of Calcutta, who always extends his sympathetic hands towards the scholars engaged in the research works. This little book would have stayed in a sealed cover for an indefinite period, if the said authorities had not helped me in its publication.

It would have been otherwise impossible for myself a man of meagre means to bear the heavy expenses of publishing the work.

I also owe my indebtedness to Dr. Sri Satkari Mukherjee, M.A., Ph.D., the then Head of the Department of Sanskrit, Calcutta University, who always patronised and helped me in the preparation of the manuscript and the completion of the work and in the matter of publication of the same.

Dr. Sri Janaki Vallabha Samkhyatirtha, M.A., Ph.D., M.L.C., Reader of the Calcutta University,

helped me by presenting a manuscript from which I derived the idea of models of many 'Bandhas' and the method of drawings.

Sri Siva Prasad Kavyatirtha, M.A., Research Professor of the Government Sanskrit College, Calcutta, lent me a copy of Kavyamala from which I also derived the idea of abstruse poetic diction, and gave me his valuable suggestion in the subject.

The late lamented M. M. Dr. Jogendranath Tarkavedantatirtha, D.Litt, Dr. Sri Gaurinath Sastri, M.A., D. Litt., Principal, Govt. Sanskrit College, Dr. Sri Probodh Chandra Lahiri, the then Principal of the Govt. Sanskrit College, Calcutta, Dr. Krishnagopal Sastri, M.A., P.R.S., the Reader, Calcutta University, helped me by their recommendations and sympathetic suggestions from time to time for the publication of this little work.

I acknowledge my indebtedness to all of them with grateful heart.

It would be failing in my duty, if I do not mention in this connection, the name of Sri Gosthabehari Das, Principal, Chandernagore, Art College, who has done hard labour in drawing the figures of the 'Bandhas'. I offer my hearty thanks to him and wish him every success in life.

I offer also my heartfelt thanks to Sri Amal Ghose, M.A., Professor in English, Risi Bankim Chandra College, Naihati, who has gone through the English rendering of the introduction and given me his valuable suggestions. My sons Sri Janakijivana Kavyavyakaranatirtha, B.A. assisted me substantially in English readering and Sri Lakshmi Jivana Kavyatirtha M.A. and Sri Krishna Jivana Bhattacharya B.A. have also helped me to expedite proof reading and in various ways. I bless them heartily for the service, they have rendered.



The peculiarity of this little work :

The pictorial figures or 'Bandhas' were considered in the Sanskrit Alankara Sastras as the goiters in the body of the literature. As circulation of Rasa (sentiment) is hampered by these goitre-like 'Bandha'-poems, so these acrostic poems are not at all desirable in abundance in the literature. This is the general remark of the old rhetoricians. It would be an impetuous audacity on my part to speak a single word against this remark. I would only pray to the scholars to go through this little book of poem for their kind consideration.

It pleases me very much to utter a word of gratitude towards The Hon'ble President of India Dr. S. Radhakrisnan, who favoured me with kind consent to dedicate this humble work to his esteemed name.

It is regrettable, that some printing mistakes have crept into the text, commentary and introduction owing to oversight and blocks could not be done satisfactory.

The errata have been enclosed herewith.

The author.

24.6.1965.

॥ श्रीः ॥

# उत्सर्ग-पत्रम् ।

सर्वागमं-सार्वभौम-विश्वविश्रुतकीर्ति-भारतरत्न-मान्यवर
डक्टर सर्वपल्लीराधाकृष्णन् भारतराष्ट्रपति-
महोदयानां श्रीकरकमलयुगलेषु

१

धन्यं भारतवर्णभार्गविभवोत्कर्षं गतं साम्प्रतं
स्वाधीनस्थितिभारतक्षितितले यत् सर्वपल्लीनिधिः ।
राधाकृष्णसुधीतमो हि विधिना सर्वस्य गर्वास्पदं
स्रष्टो राष्ट्रपतिः प्रकृष्टमहिमाश्लिष्टो हिमाद्रिप्रभः ॥

२

विद्या यस्य विकस्वरद्युतिरपि प्रद्योतमानाभवद्
भूम्ना भारतभूमिराष्ट्र-विलसल्लक्ष्मीभुजालिङ्गिता ।
लोकान् यद्वचनामृताब्धिरचना स्तब्धीकरोति क्षणात्
सोऽयं कृत्स्नमनुष्यजिष्णुयशसा विष्णूपमो गोपति ॥

३

यस्यापूर्व-क्षुपर्वसम्भ्रमकरं पीयूषवद् भाषणं
सोत्कर्षं नवदर्शनं रचयति श्रोतृप्रहर्षप्रदम् ।
वेदान्तोपनिषन्निबन्धशाधिपरो नास्तिक्यहृद्भीषणः
श्रीमान् भारतराष्ट्रगौरवरविर्जीयात् पवित्रच्छविः ॥

४

अस्मद्भाग्यवशाद् भवद्विधबुधप्राधान्य-धन्योकृतेः
प्राच्याशास्त्रविवर्द्धनं जनगणः सोल्लासमाशास्यति ।
तस्माद् भारतखण्ड-राष्ट्रपतये श्रीभारतीमण्डन-
श्रेष्ठायोपहरामि नम्रहृदयः सारस्वतं पुस्तकम् ॥

भवदाश्रवोऽहं
भट्टपल्लीनिवासि-श्रीश्रीजीव देवशर्म्मा ।

Rashtrapati Bhavan,
New Delhi-4
राष्ट्रपति भवन,
नई दिल्ली-4

February 23, 1965.

Dear Sri Srijiva Bhattacharyya,

Thank you for your letter of the 18th of February and the books and proofs which I received at Calcutta.

You may do as you desire. The proofs are returned herewith.

With best wishes,

Yours sincerely,

(S.Radhakrishnan)

Sri Srijiva Bhattacharyya Nyayatirtha,
Bhatpara, 24 Parganas.

RASHTRAPATI BHAVAN,
NEW DELHI-4.
राष्ट्रपति भवन,
नई दिल्ली-4।

March 9, 1965.


W. B. P. C. C.
Received on 17/3
No. 1010

My dear Shri Atulya Ghosh,

Thank you very much for your letter and good wishes.

It is all right; you are informing Pandit Srijiva Nayatirtha that he may dedicate the book to me.

With best wishes,

Yours sincerely,

(S. Radhakrishnan)

Shri Atulya Ghosh,
"Congress Bhawan",
59-B, Chowringhee Road,
Calcutta-20.

प्राचीने भारते शब्दार्थप्रयोगविशुद्धिरक्षार्थं मनीषिभिरङ्गीकृतः श्रमातिशयो निःसंशयं परिज्ञायते प्रमाणबलेन। प्रमाणञ्च व्याकरणं निरुक्तं शब्दशास्त्रीया ग्रन्थराजयश्च। एतावद्विस्तृतावयवं व्याकरणं विशदं निरुक्तं तर्कमूलं शब्दशास्त्रञ्च प्राचीनभाषायां कुत्राप्यन्यत्र पृथिवीखण्डे नोपलभ्यते। प्रत्येकशब्दं घटयितुं विघटयितुं च समर्था तथाविधा प्रक्रिया भाषान्तरेषु वर्तमाना न श्रूयते।

ऋग्वेदमन्त्रेऽपि शब्दशास्त्रमहिमा न परिहीयते

सक्तुमिव तितउना पुनन्तो
यत्र धीरा मनसा वाचमक्रत।
अत्रा सखायः सख्यानि जानते
भद्रैषां लक्ष्मीर्निहिताधिवाचि।
(महाभाष्यधृत–ऋग्वेदमन्त्रः ८।२।२३।२)

अस्य भावार्थः—शूर्पेण यथा शक्तवस्तुषादिभ्यो व्यावर्त्तयितुं शक्यन्ते, तथैव शाब्दिकाः शब्दशास्त्रज्ञानेन वाचोऽपभ्रंशशब्देभ्यः पृथक्कर्त्तुं प्रभवन्ति। शब्दानां सम्यगर्थबोधबलेन कोविदाः सर्वत्र समदर्शिनो भवन्ति यत एषां वाचि कल्याणमयी लक्ष्मीः (अबाधबाधिनी सम्पत्) निहितास्ति।

वैदिको मन्त्रस्तोमः सब्राह्मणः संस्कृत-साहित्यस्य पूर्वरूपम्। तत्र विहितं भावजातञ्च मर्मस्थानं संस्कृतसाहित्यस्य। यथैव पञ्चदशकलाभिरन्वितश्चन्द्रः पूर्ण इत्यभिधीयते तथा षडभिरङ्गैः सहित एव वेदः पूर्णतया प्रकाशतो जयति। शिक्षा कल्पो व्याकरणं निरुक्तं छन्दो ज्योतिषमिति षडङ्गानि। 'मुखं व्याकरणं तस्य ज्योतिषं नेत्रमुच्यते। निरुक्तं श्रोत्रमुद्दिष्टं छन्दसां विचितिः पदे। शिक्षा घ्राणं तु वेदस्य हस्तौ कल्पान् प्रचक्षते।' एतेषां प्रभावेण भारतीया संस्कृतिः सम्यता च भूयसा समृद्धि वृद्धि चाधिगता। अधुनापि षण्णामङ्गानां ये विषयास्त एव मानवसम्यतायाः विकास-निदानेषु भावसमूहेषु विशिष्टं स्थानमधिकुर्वन्ति।

आलोचनोयेऽस्मिन् प्रस्तुतविषये चित्रकाव्यस्योत्पत्तिविकासेतिहासे वैदिकषडङ्गसंस्कृतायाः भाषायाः प्रभावो विन्यासकौशलञ्च प्रदर्शयिष्यते।

(१) शिक्षा—वेदमन्त्राणां वर्णानुरूपसुष्ठूच्चारण-प्रणाली-विज्ञानं हि शिक्षाशास्त्रस्य विषयः। उच्चारणशुद्धये कियन्ति सूत्राणि कति नियमाः के च नियन्त्रणप्रकाराः शिक्षाशास्त्रे विहितानि, तेषामधुना निरूपणं दुःशकम्। एकैकवेदस्य प्रतिशाखं निबद्धा उच्चारणनियमा ऋक्प्रतिशाख्ये यजुःप्रातिशाख्ये सामप्रातिशाख्ये तथाथर्वप्रातिशाख्ये दृश्यन्ते। एतदतिरिक्ता माण्डूकी शिक्षा नारद-



शिक्षा पाणिनीया शिक्षा च ग्रन्थरूपेण सन्दृब्धा लभ्यन्ते। वर्णानामुच्चारणं कण्ठस्वराधीनम्। स्वरश्च मुखविवरोष्ठनासिकास्थानेषु स्खनाप्रमलविशेषेणाभिहतो वर्णाभिव्यञ्जको भवति। स चोदात्तानुदात्तस्वरितभेदेन त्रिधा निर्दिष्टः शिक्षाशास्त्रे। वेदेषु प्रायशो लिपिबद्धानां मन्त्राणां चिह्नदर्शनेन स्वरस्वरूपं विज्ञायते। ऋग्वेदेऽथर्ववेदे च रेखाविशेषेण–सामवेदेऽङ्कलेखनेन यजुर्वेदे तून्यथा स्वरपरिचयो भवति। मन्त्राक्षरस्योपरि यदा रेखा-चिह्नाभावस्तदा तत्रोदात्तः कल्पनीयः। यदाक्षरस्योपरिष्टादूर्ध्वगामिनी रेखा तदा स्वरितो ज्ञातव्यः। यदा मन्त्राक्षरस्याधोभागे तिर्यग्रेखा भवेत्तदानुदात्तस्वरः सूच्यते। प्रचितस्योदात्तवद्भाव इति चिह्नराहित्येन सूचनं भवति।

सामवेदेऽक्षरस्योपरिष्टादेकांकलेखः उदात्तपक्षे, स्वरिते द्व्यंक-चिह्नम् अनुदात्ते तु त्र्यंकः, प्रचिते तु न कोऽप्यंकः।

यजुर्वेदे ऋग्वेद इव रेखाचिह्नानि गृह्यन्ते। शुक्लयजुर्वेदे पुनः स्वरितविशेषे मन्त्राक्षरस्याधस्तात् चतुरङ्कचिह्नं क्वचिच्च काकपदचिह्नं (<) दीयते।

कठशाखिनामयं विशेषो यत् मन्त्राक्षरस्योपरिस्थितयोर्ध्वगामिन्या रेखयोदात्तः सूच्यते। अनुदात्तस्य चिह्नं किमपि नास्ति। स्वरितविशेषे काकपदचिह्नं मन्त्राक्षरनिम्ने प्रदर्श्यते। अथर्ववेदे स्वरचिह्नम् ऋग्वेद इव। अयं विशेषः क्वचित् स्वरितभेदे विदण्डांकुशचिह्नं (८) प्रयुज्यते।

स्वराणां दृढतरसंस्कारार्थमङ्गसञ्चालनमपि प्राचीनकालात् प्रचलति। ऋग्वेदिनां कृष्णयजुर्वेदिनामथर्ववेदिनाञ्च मस्तकसञ्चालनेन, शुक्लयजुर्वेदिनां हस्तचालनेन सामवेदिनाञ्च हस्तांगुलिसञ्चालनेन स्वरप्रक्रियानुष्ठीयते। सामवेदगाने सप्तस्वरग्रामा व्यवह्रियन्ते।*

सामवेदीया गानसम्बन्धिनी या शिक्षापद्धतिः सैव सङ्गीतशास्त्रस्य भित्तिभूमिरिति नात्युक्तिरेषा।

मन्त्राणामुच्चारणदोषेण स्वरस्य वर्णस्य वा विपर्यासश्चेत् तदा विपरीतफलप्रदत्वं तेषामिति शिक्षा शास्त्रवाक्यादेव ज्ञायते।

मन्त्रो हीनः स्वरतो वर्णतो वा
मिथ्याप्रयुक्तो न तमर्थमाह।

---

*वैदिकस्वरविवरणम् (कलिकाता विश्वविद्यालयात् प्रकाशितस्य श्रौतपाठस्य भूमिका द्रष्टव्या)

स वाग्वज्रो यजमानं हिनस्ति
यथेन्द्रशत्रुः स्वरतोऽपराधात् ।

इत्यनेनैव शिक्षाशास्त्रस्य परमप्रयोजनं व्याख्यातम् । यद्यपि लौकिकभाषायां नास्ति वेद इवोदात्तादिस्वरव्यवहारः, तथापि ह्रस्वदीर्घकण्ठ्यतालव्यादिप्रकारभेदः शिक्षाशास्त्रतः प्रवर्तितोऽधुनापि प्रचलति । चित्रकाव्यस्य रचनाया यद् वैचित्र्यं पदमादधाति, शिक्षाशास्त्रप्रभावादेव तत्प्रतीतिः सम्भवति । यतः समजातीयानां वर्णानां सज्जानिमित्ता या विच्छित्तिः सानुभूयते तस्या माधुर्यमवधार्यते च तेषामुच्चारणमहिम्ना । इदानीं पाश्चात्यदेशेषु वर्णानुरूपा यथोच्चारणपद्धतिरङ्गीकृता स्यात्तदर्थं महती विचार-चातुरी प्रचेष्टा च दृश्यते । आङ्गलभाषाया वर्णक्रमं स्वीकृत्य शिक्षाशास्त्रानुगतं वर्णोच्चारणमधिकृत्य च शब्दप्रकाशार्थं महदालोचनं क्रियते तत्तद्देशवासिभिः ।

भारतवर्षे तु वैदिकसमयादारभ्य संस्कृतभाषायाः शिक्षाशास्त्रमनुसृत्य ध्वनिविज्ञानमादृत्य च वर्णमाला समुच्चार्यते । प्रदेशभेदेन सत्यपि स्वल्पे प्राकृतवर्णोच्चारणप्रभाववशादुच्चारणभेदे परम्परागतसम्प्रदायसिद्धा वेदमन्त्रोच्चारणशैली समरूपैव श्रूयतेऽद्यापि समग्रेऽस्मिन् भारते वर्षे । शिक्षाशास्त्रस्य महिमैव तत्र हेतुरिति विदितमेव सर्वेषाम् । शिक्षाशास्त्रे वर्णानामुच्चारणमधिकृत्य स्थानप्रयत्नयो नियमतो निर्देशात् तेषां परस्परं समजातीयत्वबोधे न विलम्बो भवति । तत एवानुप्रासयमकाद्यलंकाराणां तथा चित्रकाव्यस्य रचनाकलाकौशलं सुकरं भवति ।

(२) कल्पः—कल्पसूत्रं वा । आश्वलायनापस्तम्बबौधायनकात्यायनादयो मुनयः कल्पशास्त्रं कल्पसूत्रं वा रचयन्तः कस्मिन् यज्ञे कतमो मन्त्रः प्रयोज्य इति सुष्ठु निरदिशन् । यज्ञवेदीनिर्माणमधिकृत्य तदाकारपरिणाहौ कीदृशौ भवेतां तस्योपदेशः कल्पशास्त्रादेव ज्ञातव्यः । यथाशास्त्रं यज्ञानुष्ठाने कर्त्तव्ये कल्पसूत्रमवश्यमनुसरणीयम् । ब्राह्मणकाण्डे वर्तत एव दीक्षणीयेष्टिवृत्तान्तः, सा चेष्टिः दर्शपौर्णमासयज्ञक्रियांशेन सह बहुधा सम्बध्यते । दर्शपौर्णमासयज्ञत आरभ्याश्वमेधयज्ञावधि कुत्र केषां मन्त्राणां विनियोगः स्यादिति तदुपदेशः कल्पसूत्रेषु विशेषतो निबद्धः । अतो ब्राह्मणकाण्डेन सह कल्पसूत्राणां घनिष्ठः सम्बन्धः सूच्यते । कल्पसूत्रस्यावान्तरविभाग एकः शुल्वसूत्रम् । अस्मिन्नेव शुल्वसूत्रे वेदीकुण्डादि-निर्माणस्य विधिरुपलभ्यते । क्वापि वेदी चतुष्कोणा कुण्डं किञ्चन त्रिकोणं वेदी क्वापि डमरुवत् क्वापि वृत्ताकारा काप्यर्द्धवृत्ताकृतिरित्याद्युपदेशः शुल्वशास्त्रे विवृतो दृश्यते । अस्य शास्त्रस्यैव महिम्ना होमस्य स्थण्डिलनिर्माणं पूजाया मण्डलरचना च सम्भाव्यते, ततश्च तन्त्रशास्त्रे बहुविधानां यन्त्रचित्राणा-



मङ्कनं कल्प्यते । इदं कल्पशास्त्रोक्तविधानं काले ज्यामितिक्षेत्रमितिशास्त्रयोर्मूलमभूदित्यनुमातुं शक्यते । आलोचयिष्यमाणस्य संस्कृतचित्रकाव्यस्य कल्पनाबीजमनुसन्धीयते चेदिदं कल्पशास्त्रं परम्परयादिभूत उत्स इत्यनुमानं नैकान्तमयुक्तं प्रतिभाति । शिष्याणां शिक्षणार्थमङ्किताना तादृश-वेदीकुण्डादीनां रेखाचित्रतश्चित्रकाव्यस्य रेखामयचित्राणि कल्पनापथमागतानीति प्रतीयते ।

(३) व्याकरणम्—नामाख्यातोपसर्गनिपातभेदेन पदं चतुर्विधम् तत्तत्पदघटितं वाक्यञ्च विश्लिष्यते व्याकरणेन । (वाग् वै पराच्यव्याकृतावदन्ते देवा इन्द्रमब्रुवन्निमान्नो वाचं व्याकुर्विति, तै.स. ६६।४।७) । पूर्वमग्निमीळे पुरोहितमित्यादिवेदमन्त्रराशिरव्याकृत आसीत् सागरतरङ्ग-समुत्थ एकध्वनिरिव समस्तवेदमन्त्राणाम् अभिन्नाकृतिमिलितावयव एकः शब्दोऽश्रूयत, प्रकृतिप्रत्ययपदसन्धि-विभागप्रदर्शकः कोऽपि ग्रन्थस्तदानीं नासीत् । देवैः प्रार्थितो देवराजः पश्चादखण्डवेदमन्त्रसमूहं पदप्रकृतिप्रत्ययविभागपूर्वकं व्याचष्टे ।

व्याकरणशास्त्रस्य काचिदनादिपरम्परा शाकटायनसम्मतोपलभ्यते । 'यथेवेदमनुच्छिन्नं चन्द्रतारकादि एवमक्षरसमाम्नायस्य न कश्चिदाधुनिकः कर्त्तास्ति । इदमक्षरच्छन्दोवर्णशः समनुक्रान्तं यथाचार्या ऊचुर्ब्रह्मा बृहस्पतये प्रोवाच बृहस्पतिरिन्द्राय इन्द्रो भरद्वाजाय भरद्वाज ऋषिभ्य ऋषयो ब्राह्मणेभ्यस्तं खल्विममक्षरसमाम्नायमित्याचक्षते । न भुक्त्वा न नक्तं प्रब्रूयाद् ब्रह्मराशिम्' इत्यादि । बहुषु व्याकरणाध्ययनप्रयोजनेषु महाभाष्यकारः पतञ्जलिरेकं प्रयोजनं विशेषेण प्रणिधायमुवाच–'म्लेच्छो ह वा यदपशब्दः, म्लेच्छा मा भूम इत्यध्येयं व्याकरणम् ।' यथा वयं नापशब्दभाषिणो भवेम तदर्थं व्याकरणाध्ययनमावश्यकम् । भाषाशुद्धये तथापशब्द-परिहाराय व्याकरणज्ञानमवश्यमाहरणीयम् । भाषाभावयोः सम्बन्धो घनिष्ठो भाषाशुद्ध्या भावशुद्धिरपि प्रजायत इति प्राचीनः संस्कारो भारतीयानाम् । अतएव भाषायाः प्रवाहो यथापशब्दादिदोषरहितः स्यात्तदर्थं महान् प्रयासः स्वीकृतो भूरिभिः पूर्वसूरिभिः ।

संस्कृतभाषाया व्याकरणं वैदिकव्याकरणच्छायामालम्ब्य रचितम् । पाणिनिपतञ्जलिकात्यायनास्त्रयो मुनयो वैदिकव्याकरणानुशासनज्ञा यथा सुष्ठुतमं शब्दस्वरूपं विदितवन्तस्तथा नान्ये केऽपीति विश्वासो बहुकालं यावत् प्राचलज्जनमनःसु । 'त्रिमुनि व्याकरण' मिति किंवदन्ती प्रचरति । वस्तुतः पाणिनेरष्टाध्यायी, पतञ्जलेर्महाभाष्यं कात्यायनस्य वार्त्तिकसूत्राणि च संस्कृतव्याकरणस्य चरमं सिद्धान्तं प्रकटयन्ति ।

पाणिनेः प्राक्कालीनायां संस्कृतभाषायां यादृगव्यवस्थितरूपता विशृङ्खलता

च परिज्ञायते–पाणिनेरुत्तरकाले मुनित्रयस्य अगद्दुर्लभया प्रतिभया तदवसानं सञ्जातम्।

इन्द्रश्चन्द्रः काशकृत्स्नः पिप्पली-शाकटायनः।
पाणिन्यमरजैनेन्द्रा अष्टौ ते शाब्दिकाः स्मृताः॥ (कविकल्पद्रुमः)

अष्टावेते वैयाकरणाः सम्प्रदायप्रवर्त्तकाः। प्राचीनतमादैन्द्रव्याकरणादारभ्य देवनन्दिजिनेन्द्रकृतिपर्यन्तं सर्वाण्येव व्याकरणानि स्वस्वप्रभावेण संस्कृतभाषां समृद्धिमतीं चक्रुः। पाणिनिः स्वयमेव सम्प्रदायप्रवर्त्तकः। पाणिनेः प्राग्भवीया बहवो वैयाकरणाः वैदिक–भाषारीतिमनुसरन्तो व्याकरणानि रचयामासुः। भारद्वाजो गार्ग्यो व्याडिर्गालवो भागुरिश्चैते मुनयोऽधुनापि पदविशेषरूपं प्रतिपादयन्तः स्मर्यन्ते। अर्वाचीने काले बहूनि लौकिक-संस्कृतभाषाव्याकरणानि रचितान्यपि न स्वतन्त्रं मतं प्रकाशयितुं प्रभवन्ति, परन्तु पूर्वोक्तं मुनित्रयमतमादृत्यैव जनैराद्रियन्ते। अर्वाचीन-लौकिक-व्याकरणेषु क्वचिदपाणिनीयपदविशेषः समर्थितोऽपि, विरल एव तत्प्रयोगो न संख्यानयोग्यः।

कोषकृदमरसिंहो बौद्धवादी, जैनाचार्यो जिनेन्द्रश्च संस्कृतभाषाभ्युदये प्रतिभाबलेन महान्तमुपकारं जनयामासतुः। पश्चाच्च हेमचन्द्रादीनां जैनानामवदानं चिरं स्मरणीयतामापद्यते।

चित्रकाव्यरचनायां शब्दवैचित्र्य-सम्पादनार्थं व्याकरणस्य प्रयोजनमधिकमनुभूयते। नवनवशब्दानां सङ्घटनायां तथा रूपान्तरतापरिणमने व्याकरणमेव सहायो भवति कवयितॄणाम्। चित्रकाव्यनिर्माता क्वचित् क्वचित् प्रसिद्धशब्दानां व्यवहारविघ्नमनुभवति, बन्धनियमाधीनतया नवशब्दविशेषाविष्कारं विना न सम्भवति बन्धग्रन्थनम्। व्याकरणं सहायीकृत्य कविर्बन्धानुरूपं शब्दसंघटनं विधाय तादृशसंकटादुत्तीर्णो भवति।

(४) निरुक्तम्—निश्चितरूपेण निःशेषरूपेण वा यत्रोक्तं तन्निरुक्तम्। पदार्थबोधाय शास्त्रान्तरं नापेक्षितं यतः, सर्वेषां पदानामर्था निश्चितं निःशेषं वा यत्र निरूपितास्तन्निरुक्तं नाम वेदाङ्गम्। निरुक्तं काण्डत्रयेण विभक्तम्—(१) निघन्टुकाण्डम्। (२) निगमकाण्डम् (३) देवताकाण्डञ्च। वैदिकशब्दानां प्रयोगपरिपाटीमर्थसम्पत्तिं तथा तादृशार्थागमनिमित्तञ्च विचारयति निरुक्तशास्त्रम्। कियन्तः शब्दा गोवाचकाः सुवर्णवाचकाः पृथिवीवाचका वेति बहूनां शब्दानां पर्यायशब्दा निरुक्ते प्रदर्शिताः। निघण्टुकाण्डे गोशब्दादपारशब्दपर्यन्तं, निगमकाण्डे–'जहा' पदरूपाद् ऋचीसपदपर्यन्तं, देवताकाण्डे चाग्निशब्दतो देवपत्नीशब्दावधि व्याख्यानं दृश्यते। निरुक्तस्यैव महिम्ना समानार्थकानां भूयसां शब्दानां पूगीकरणं बह्वर्थयुक्तानां शब्दानाञ्च पृथक्श्रेणीबन्धनं परिज्ञायते।

निरुक्तमेव प्राथमिकमभिधानपुस्तकम्। संस्कृतभाषायाः क्रमविकाशविवरणे निरुक्तस्य स्थानं महनीयमिति निःसंशयं वक्तुं शक्यते। निरुक्तस्य शब्दतत्त्वार्थलोपरिचयादेव संस्कृतभाषायां शब्दश्रेणी-विचारभेदः प्रावर्त्तत। व्याकरणं निरुक्तञ्च प्राचीनभाषाविज्ञान (Philology) मभिधानञ्च (Dictionary)। चित्रकाव्यग्रन्थनेऽनेकार्थशब्दानां तथा समानार्थशब्दानां यथाप्रयोजनं निर्वाचनमतीवावश्यकमिति निरुक्तशास्त्रस्यापि चित्रकाव्येन सह परम्परया सम्बन्धो दुरतिक्रमः।

(५) छन्दः। वेदे मुख्यतया सप्तानां छन्दसां प्रयोगो दृश्यते। गायत्र्युष्णिगनुष्टुब् बृहतीपङ्क्तित्रिष्टुब्जगत्य इति सप्त च्छन्दांसि। चतुर्विंशत्यक्षरैर्गायत्री, अष्टाविंशत्यक्षरैरुष्णिक्, द्वात्रिंशदक्षरैरनुष्टुप् षट्त्रिंशदक्षरैर्बृहती, चत्वारिंशदक्षरैः पङ्क्तिः, चतुश्चत्वारिंशदक्षरैः स्त्रिष्टुप् तथाष्टचत्वारिंशदक्षरैर्जगती भवति। अष्टाक्षरैस्त्रिपदा गायत्री, सप्ताक्षरैश्चतुष्पदा भवत्युष्णिक् अष्टाक्षरैश्चतुष्पदा अनुष्टुप्, नवाक्षरैश्चतुष्पदा बृहती, दशाक्षरैश्चतुष्पदा पङ्क्तिः एकादशाक्षरैश्चतुष्पदा त्रिष्टुप्, द्वादशाक्षरैश्चतुष्पदा जगती भवेत्।

छादनाच्छन्दः—यद्दोषमाच्छादयति तच्छन्दः। मन्त्रस्य दोषमाच्छादयतीति छन्दःशब्दस्य व्युत्पत्तिः। वेदे छन्दसामवान्तरभेदे सत्यपि मुख्यतया सप्तैव च्छन्दांसि। वेदादर्वाक् संस्कृतसाहित्यमधिकृत्य बहुविधानि विचित्राणि च्छन्दांसि विकाशमापुः। इमानि तावच्छन्दांसि संस्कृतभारत्या अभिनवलालित्यमुदपादयन्। अस्यैव च्छन्दो-वितानस्य महिम्ना संस्कृतभाषा गद्यरूपापेक्षया पद्यात्मिकाधिकतरं लोकमनो रञ्जयतीत्यनुभूयते। छन्दोबद्धभाषायां यादृक् नर्त्तनं (Nodding) वर्त्तते तादृक् तरङ्गप्रादनतिर्ग्रन्थाभ्यासकर्मणः परममनुकूला भवति बालानाम्। तत्त्वमिदं वेदादारभ्य संस्कृतभारत्या बहुषु क्षेत्रेषु स्वीकृतं प्रतिभाति। भाषाया मिताक्षरता च सम्भवति छन्दोबन्धप्रसादेन। अतएवायुर्वेदेतिहासाभिधानदर्शनस्मृतिज्योतिषादिशास्त्रेषु बाहुल्येन पद्यस्वरूपताङ्गीकृता पूर्वविद्भिः। अभ्यासयोग्यविषयाणां पद्यरूपेण निबन्धन-शैली संस्कृतभाषायाः किमपि वैशिष्ट्यं व्यञ्जयति। तथाहि विद्यार्थिनां मेधावर्द्धनोपायः सल्लब्धो। अभ्यासयोगस्य द्वितीयकौशलमाविष्कृतं सूत्ररचना-वैदग्धीद्वारा। सूत्ररचनाचातुर्य्येण भाषायाः संक्षेपकरणम् अपि च शास्त्राभ्यासस्य सरलोपायः प्रदर्शितः। दर्शनशास्त्राण्यनेकानि व्याकरणानि स्मृतिशास्त्राणि च सूत्ररचनायाः निदर्शनस्थानानि विराजन्ते। इह तु नास्ति च्छन्दोविमर्शः परन्तु वर्णसंख्यासंक्षेपेण विशदविषयाणामप्यध्येतृवर्गस्य हृदि धारणस्य कौशलमाविष्कृतम्।

आलोचनीयेऽस्मिन् विवरणे चित्रकाव्यरचनायां छन्दोमयवाग्विन्यासस्य वर्णसंक्षेपस्य चापरिहार्यत्वं पश्चादालोचयिष्यते। चित्रकाव्यस्य च्छन्दोऽक्षर-संक्षेपश्च प्राणस्थानमिति नातिशयोक्तिः।

संस्कृतभाषायां छन्दस्तु भाषान्तरतुलनया बहुधा व्यापकम्। आङ्गल-भाषायां छन्दःपद्धति विश्लेषणात्मिका (Analytical) त्रीन् पञ्च सप्त वा समरूपद्व्यक्षरावयवान् सञ्जीकृत्य प्रायश आङ्गलभाषायां छन्दो निबध्यते। क्रमिकलघुगुरुस्वरयुक्तवर्ण-(Iambic) द्वयेनाथवा क्रमिकगुरुलघु-(Trochaic) वर्णद्वयेन सञ्जीकृतैः कदाचित् पञ्चावयवैर्वा सप्तावयवै च्छन्दोविशेषाणां निर्माणं (Pentameter, Heptameter) भवति। संस्कृतभाषायां तु कति-पयवृत्तानि वर्जयित्वा छन्दांसि समैरंशैर्न विभाजयितुं शक्यन्ते। कानिचन वृत्तानि विद्यन्ते यत्र प्रतिपादमष्टाक्षरैश्चतुरक्षरैः सर्वैर्गुरुभिरेव संघटनं भवति यथा विद्युन्माला, कन्या वा; तोटकञ्च भवति चतुः 'सकारयुक्तम्'। सकारस्य संकेतितार्थस्तु अन्त्य-गुरुसहितलघुद्वयात्मकः (ᴗ ᴗ—), ततश्च चतुरावृत्त-'स'-कारघटितपादेषु द्वादशाक्षरै रचितेषु तोटकच्छन्दसः समानांशाश्चत्वारः सम्भवन्ति। परन्तु बाहुल्येन संस्कृतच्छन्दांसि लघुगुरूच्चारणसमेतवर्णमालामाश्रित्य प्रसरन्ति स्वरतरङ्गायमानानि, न खलु प्रायेण तत्पादावयवाः समानांशविभाज्या भवन्ति। एवमनिर्णेय-समानभागस्वरसंघाताश्छन्दःप्रकाराः संश्लेषणरीतिं (Synthetical) व्यञ्जयन्ति।

(६) ज्योतिषम्—ज्योतिषशास्त्रेण तिथिनक्षत्रादीनां निरूपणं क्रियते, भचक्रस्वरूपं विज्ञायते च। वैदिकयज्ञादीनां कालनिर्णयः शास्त्रेणानेनैव विधीयते। अर्वाचीनकाले ज्योतिषशास्त्रस्यानुशीलनेषून्नततररीत्या प्रचलत्सु पाठार्थिनां सुखबोधाय चन्द्रसूर्यपृथिवीकुजादिग्रहाणामवस्थानसम्बन्धप्रकाशार्थं त्रिभुज-चतुर्भुजवृत्तार्द्धवृत्तडिम्बाकृतिक्षेत्राणामंकनमाविष्कृतम्। एतेषां क्षेत्राणामंकन-द्वारा रेखामयचित्राणां प्रादुर्भावः समजनि। ईदृशरेखाज्ञानं चित्रकाव्यस्य चित्राणामंकनकल्पनाबीजमित्यनुमानं नासङ्गतं प्रतिभाति।

प्रसङ्गादिदमिदानीं समुल्लेख्यम्—यच्चित्रकाव्यकल्पनाकर्मणि शिक्षाशास्त्रस्य वर्णोच्चारणज्ञानं व्याकरणस्य शब्दसंघटनाशैली, निरुक्तस्याभिधानस्य वा शब्दार्थ-व्युत्पत्तिः कल्पशास्त्रस्य ज्योतिषशास्त्रस्य च चित्रांकनचातुरी तथा छन्दोज्ञानं सर्वमिदं समाहृतमेकीकृतमिव प्रतीयते।

## चित्रकाव्यस्य स्वरूपम्।

साहित्यमन्दिरेषु वाग्देवतायाः पूजायां यथैव गद्यपद्यनिबन्धकुसुमानामायोजनं



सम्भाव्यते, तथैव चित्रात्मक-पिष्टकांकितमण्डलानां समादरो दृश्यते। पद्य-निबन्धनवद् आलेख्यांकनमपि कलाशास्त्रस्य रूपान्तरम्। काव्यमालेख्यञ्च विभिन्न-स्वरूपमपि द्वयमेव रसिकचित्तं चिराद्याकर्षति। इदमपि दृष्टं यद् उभयं क्वचि-न्मिलितरूपं सद्वाणीपूजायामभिनवोपचारतया गण्यते स्म। एतदेव चित्रकाव्यम्। 'पद्माद्याकारहेतुत्वे वर्णानां चित्रमुच्यते।'

कवीनां चित्रविधानैपुण्यं प्रायो न दृश्यते, नापि चित्रविद्यापरायणानां काव्य-रचनायामस्ति पाण्डित्यम्। वरमकवि-चित्रकराणां तथा चित्रविधानभिज्ञानां कवीनां संख्या गरीयसी। तथापि कवीनां चित्रकलाविदां च चित्तभूमिगतं सादृश्यं किञ्चिदस्ति। छन्दोवर्णमयभावाभिव्यक्तिरेव काव्यसर्गः, रङ्गरेखा-मयभावस्फुरणाद्भवति चित्रकल्पना। उभयत्रैव सौन्दर्यसृष्टये शिल्पिचित्त-मुन्मुखीभवति। अत्र दृष्टान्तस्थानमधिकृत्य विराजते कवीन्द्रो रवीन्द्रनाथः। यथैव वर्णमालासंयोगेन कविवरोऽयं रसभावविशिष्टं कवितापुञ्जं रचयामास तथैव मसीरेखासम्पातेनांकितं भावसम्भृतं चित्रचयं निर्माय अगज्जनं विस्मय-रसाप्लुतं चक्रे।

बहुधा हि समुत्पद्यते भावरसश्चित्तभूमितः। यथा हि स्वरग्रामसंयोगात् सङ्गीतकला श्रोतुर्भावविशेषं जनयति, यथा हि गात्रस्पन्दनजन्मा नृत्यकला दर्शकस्य हृदयं मदयति, यथा हि ते एव नृत्यगीते मिलिते दृश्यकाव्येन सह प्रयुक्ते सौन्दर्य-मधिकतरं विकाशयतः, तथैव काव्येन सह चित्रकलायाः, वर्णच्छन्दोमयपद्यैः सह रेखामयचित्रविशेषस्य मेलनेन यदधिकं वैचित्र्यमुत्पद्येत, तत्र सन्देह एव नास्ति।

आलंकारिका वैचित्र्यमेवालंकारं व्याचक्षते। अतएव संस्कृतवाङ्मये काव्य-चित्रयोर्मेलनेन या विच्छित्तिरनुभूयते सैव चित्रालंकारनाम्ना निर्दिश्यते। चित्रालंकारबहुलं काव्यमेव चित्रकाव्यमिति व्यपदेशं लभते। कविकौशलेन वर्णाश्चेत् तथा सज्जीकृता भवन्ति यथा वर्णस्थित्यनुपातेन रेखांकने कृते पद्मखड्ग-मुरज-चक्र-गोमूत्रिकाद्याकारस्फुरणं सम्भवेत्। अथवा पद्माद्याकारं मनसि कल्पयित्वा कविश्चेत् तदनुसारिणीं छन्दोबद्धां वर्णसज्जां कर्तुं प्रभवति, तदा वर्णसहितरेखाभिर्यथांकनसङ्गत्या तथाविधं किञ्चिदेकं चित्रं निर्माति।

ननु सामान्यतो वर्णा लिपिसन्निवेशवशेन यथैव श्रवणेन्द्रियग्राह्यस्वरूपता-मनुभावयन्ति, तथैव रेखांकनसहितवर्णबोधिताः पद्माद्याकाराः पद्मादिकं चक्षुरि-न्द्रियगोचरतां प्रापयन्ति। एतेषां चित्राणामनुभवस्तु सुरभिचन्दनमितिवत् अलौकिकज्ञानलक्षणसन्निकर्षवशात् कल्पनीयः। श्रावणदर्शनप्रत्यक्षयोर्युगपदुत्पत्तौ लौकिक-सन्निकर्षस्यासामर्थ्यात्। उक्तञ्च दर्पणकृता 'अस्य च तथाविधलिपि-

सन्निवेशविशेषवशेन चमत्कारविधायिनामपि वर्णानां तथाविधश्रोत्राकाश-समवाय विशेषवशेन चमत्कारविधायिभिर्वर्णैरभेदेनोपचाराच्छब्दालंकारत्वम्।

अस्याशयस्तु—वर्णांकनसम्भूतचित्रस्य शब्दरूपत्वाभावात् कथं शब्दालंकारत्वं सम्भवेदितिचेन्न, चित्रभूतानामपि वर्णानामुच्चारणकाले शब्दरूपतया परिणमनात् तयोर्व्यंग्यव्यञ्जकयोरभेदबुद्ध्या शब्दालंकारत्वं व्यवस्थाप्यते।

चित्राणामनेकधा कल्पनं सम्भवति, विभिन्नेषु ग्रन्थेषु विभिन्नरूपाणि चित्राण्युपलभ्यन्ते। इमानि चित्राणि सामान्यतः पद्मबन्ध-खड्गबन्धादिनाम्नापि समाख्यायन्ते।

एवं वर्णस्य चित्रस्य च संयोजनप्रयत्नः संस्कृतसाहित्ये खृष्टीयषष्ठशतकादारब्ध इत्यनुमीयते। तत्कालात्परं चित्रकाव्यस्यानुशीलनं बहुक्षेत्रेषु लब्धप्रसरं प्रतीयते।

### चित्रशब्दस्यार्थभेदाः।

अलंकारशास्त्रादिदमुपलभ्यते यत् चित्रशब्दो यथा चित्रं नामालंकारविशेषं बोधयति तथा चित्रं नाम किञ्चित् काव्यविशेषमप्यवगमयति। ध्वनिकाव्यमुत्तमं गुणीभूतव्यङ्ग्यकाव्यं मध्यमं तदितरत् तृतीयमवरं चित्रकाव्यं स्मृतम्। बहव एवालंकारिका मन्यन्ते यच्चित्रालंकारमय-काव्यस्वरूपमेकम्, अवरत्वेनोल्लिखितं चित्रकाव्यञ्चान्यदिति। केचित्तु तृतीयश्रेणीयचित्रकाव्यमध्य एव चित्रालंकारोज्ज्वलकाव्यस्यान्तर्भाव इति वदन्ति।

ध्वनिकाव्यस्योत्कर्षनिदानमिदमेव यत् तादृशकाव्याध्ययनादनन्तरं शब्दसमूहानाम् अभिधाशक्तिबलादर्थोपस्थित्या यः सामान्यतः समुदितार्थः प्रतीयते, तदनन्तरं व्यञ्जनाशक्तिबलादपरः कोऽपि सुसङ्गतिसुन्दरोऽर्थो वीणाध्वनेरनुरणनवत् प्रकाशते-सोऽयमर्थः सहृदयहृदयं सान्द्रानन्दनिर्भरं करोतीति ध्वनिकाव्यस्योत्तमता।

तत्र दृष्टान्तो यथा

भम धम्मिअ वीसत्थो सो सुणओ अज्ज मारिदो देण।
गोदावरीकच्छकुंजवासिणा दरीअसिघेण॥
[भ्रम धार्मिक विश्वस्तः स श्वा अद्य मारितस्तेन।
गोदावरीकच्छकुञ्जवासिना दृप्तसिंहेन॥]

नानाकुसुमसुरभिते कस्मिन्नपि रमणीयोद्याने काचन स्वैरिणी रहसि परपुरुषेण सह विहारसुखमनुभवति स्म। कोऽपि साधुस्तत्र पुष्पचयनाय प्रत्यूषसि प्रतिदिनमागच्छन् परपुरुषस्य रहो वहिर्गमन-विघ्नमुदपादयत्। साधोरुद्यानागमनप्रतिषेधार्थमेकः श्वापि नियोजितः। तदुत्पातेनाप्यनिवर्तमानं साधुं विज्ञाय सा कुल्टा तमेकदा कथयामास यथा सन्निहितगोदावरीकच्छकुञ्जवासिना केनचन दृप्तसिंहेन व्यापादितः स श्वेति भवद्भ्रमणं निर्बाधं भवत्विति। आपातश्रवणात् साधुरनया रमण्या निर्बाधभ्रमणार्थमभ्यर्थित इव प्रतिभाति, पश्चात्तु कृते विचारे सुस्पष्टं प्रतीयते यद् यथा समीपस्थः सिंहः श्वानं हतवांस्तथा साधुमपि व्यापादयिष्यतीति भ्रमणनिवृत्तिमुद्दिश्यैव श्लोकोऽयमुक्तः। अनन्तरप्रतीतोऽबाधितोऽयमर्थो ध्वनिरित्युच्यते। यत्रायं ध्वनिर्मुख्यार्थरूपेण भासते, तदेव ध्वनिकाव्यमुत्तमकाव्यं वा।

यत्र तु ध्वनिर्गुणीभूतः सन् वाच्यार्थं समरूपं स्फुटतरं वा जनयति, तद् गुणीभूतव्यङ्ग्यं नाम मध्यमं काव्यम्। यथा

ग्रामतरुणं तरुण्या नववञ्जुलमञ्जरीसनाथकरम्।
पश्यन्त्या भवति मुहुर्मलिना नितरां मुखच्छाया॥ (काव्यप्रकाशः)

अस्य पद्यस्य वाच्यार्थ एव मुख्यो भवति, ध्वनिस्तु गौण एव। तरुण्या मुखमालिन्यहेतुर्नात्र परिस्फुटतां व्रजति। परन्तु मुखच्छाया मलिना जातेति वाच्यार्थबलादिह ध्वनिरुन्नीयते यद् ग्रामवास्तव्यस्तरुणः कश्चिद् यदा तावदशोकवनाभिसाराय काञ्चन तरुणीं संकेतेन सूचयामास, तदा सा तदभिसारं कार्यान्तरव्यपदेशेन प्रत्याख्यातवती। परन्तु पश्चादशोकमञ्जरीकरेण तरुणेन पथि सा दृष्टेति तदीयमिथ्याव्यवहारः परिज्ञात इति मुखच्छायाया मालिन्यहेतुरिति व्यङ्ग्यार्थस्य गुणीभावः।

अनन्तरं तृतीयमधमं काव्यमलंकारशास्त्रादधिगम्यते—यच्च ध्वनिगुणीभूतव्यङ्ग्यकाव्ययोरन्यत्तदेव चित्रकाव्यम्। 'शब्दचित्रं वाच्यचित्रमव्यङ्ग्यमवरं स्मृतम्।' चित्रकाव्यं खलु द्वेधा विभज्यते—शब्दचित्रं वाच्यचित्रञ्चेति। काव्येऽस्मिन् व्यञ्जनालभ्यस्यार्थस्याभावाद् विशदरूपेणार्थगतवैचित्र्यप्रकाशासामर्थ्याच्च कथितमिदमवरमिति।

शब्दचित्रस्योदाहरणं यथा—

स्वच्छन्दोच्छलदच्छकच्छकुहरच्छातेतराम्बुच्छटा-
मूर्च्छन्मोहमहर्षिहर्षविहितस्नानाह्निकाह्नाय वः।
भिन्द्यादुद्यदुदारदर्दुरदरीदीर्घा दरिद्रद्रुम-
द्रोहोद्रेकमहोर्मिमेदुरमदा मन्दाकिनी मन्दताम्।

पद्येऽस्मिन् शब्दविशेषयोजनालभ्योऽनुप्रासाडम्बर एव दृश्यते, परन्तु कस्यापि रसस्य भावस्य वा व्यञ्जना नास्ति। ईदृशस्य काव्यस्यावरत्वेन परिगणनं कृतमालंकारिकैः। अस्यैव काव्यस्य शब्दचित्रमिति व्यपदेशः।

ध्वनिकृदानन्दवर्द्धनाचार्योऽपि मन्यते—
रसभावादिविषयविवक्षाविरहे सति।
अलंकारनिबद्धो यः स चित्रविषयो मतः॥

अतएव शब्दाडम्बरतत्त्वेऽपि ययोः शब्दार्थयो रसभावादिप्रकाशो न भवति तच्चित्रकाव्यमिति कथ्यते। यत्र बिनापि शब्दाडम्बरं यदि यत् किञ्चिदनुप्रासाद्यलंकारतत्त्वमथच नास्ति रसोद्बोधस्तदपि चित्रकाव्यतया परिगण्यते। यथा

विनिर्गतं मानदमात्म-मन्दिराद्
भवत्युपश्रुत्य यदृच्छयापि यम्।
ससम्भ्रमेन्द्रद्रुत-पातितार्गला
निमीलिताक्षीव भियामरावती।

पद्यमिदं हयग्रीववधनामककाव्यादुद्धृतम्। अत्र हयग्रीवस्य नामश्रवणमात्रेण स्वर्गनगर्य्याः कीदृगवस्था बभूवेति वर्णितम्। अत्र यद्यपि किञ्चिदर्थवैशद्यमुपलभ्यते, तथापि दैत्यस्य यदृच्छया न युयुत्सया निजगृहाद्विनिर्गमनं न वीररसव्यञ्जकम्। अपिच न कदाचिदमरावत्या भीतिः सम्भवति, अचेतनत्वात्। अमरावत्या उत्प्रेक्षितं त्रासवत्त्वं न सामाजिकरसोद्बोधजनकं प्रत्युत तदुद्बोधविरोधि। वस्तुतो या स्वर्गनगरी दुःखासम्भिन्नाविच्छिन्नसुखस्थानतया सामाजिकानां बद्धमूलसंस्कारविषयस्तस्या भिया नेत्रनिमीलनवर्णनं सामाजिकानां मनसि रसबोधं प्रतिबध्नातीति भावः।

अशेषविशेषविदप्पयदीक्षितः स्वरचित-चित्रमीमांसाग्रन्थे पूर्ववत् काव्यं त्रिधा व्यभजत्। ध्वनिर्गुणीभूतव्यङ्ग्यं चित्रञ्चेति। चित्रकाव्यमधिकृत्य तेनोक्तं यद् 'अव्यङ्ग्यमपि चारु तच्चित्रम्'—व्यञ्जनावृत्ति-लभ्यार्थहीनमपि यद् रमणीयं तच्चित्रं नाम काव्यम्। चित्रकाव्यञ्च त्रेधा प्रकल्पितम्। शब्दचित्रम् अर्थचित्रम् उभयचित्रञ्चेति। शब्दचित्रं प्रायशो नीरसतया कविभिरुपेक्षितम्। विचारणीय-विषयेन सहास्याप्यनतिप्रयोजनतयास्माभिरपि परित्यज्यते। इत्यतः शब्दचित्रं वर्जयित्वार्थचित्रमधिकृत्य विशदमीमांसा प्रदर्श्यते। अतःपरम्अर्थचित्रमध्ये सर्वेषामलंकाराणामन्तर्भावं मन्वान आचार्यदीक्षितः उपमाया अपूर्वमहिमानं संकीर्त्य उपमैव बहूनामलंकाराणां मूलमिति प्रतिपादयितुमियेष।



तदिदं विश्वं चित्रं ब्रह्मज्ञानादिवोपमाज्ञानात्।
ज्ञातं भवतीत्यादौ निरूप्यते निखिलभेदसहिता सा॥

दीक्षितमहोदयानां मीमांसानुसारेण विज्ञायते यत् मुख्यगौणभावेन ध्वनिसम्बद्धं काव्यं परिहायान्यत् सर्वं काव्यं शब्दचित्रकाव्यतया परिगणनीयम्। परन्त्विदं नाधमकाव्यतया हेयदृष्ट्या विलोकितम्। एतद्विषये काव्यप्रकाशकृद्भिः सहैतेषां मतं विपरीतमिति प्रतीयते।

पण्डितराज-जगन्नाथसूरयस्तु 'चित्रमीमांसाखण्डनं' नाम ग्रन्थं विरचय्य दीक्षितमतखण्डनं कर्तुकामा अपि चित्रकाव्यभेदविषयमधिकृत्य न कमपि सिद्धान्तं स्पष्टतया प्रतिपादितवन्तः।

आलोच्यमान-चित्रकाव्य-निबन्धविषयश्चित्रकाव्यं तु दीक्षितमते शब्दचित्रस्यैवान्तर्भावं भजते।

काव्यप्रकाशकृन्मते चित्रकाव्यान्तर्भूतं शब्दचित्रं पृथगेव। न तदेतन्निबन्धविषयश्चित्रकाव्यस्वरूपम्। तन्मते चित्रं नामालंकारविशेषः, अतएव तद्बहुल-काव्यमिदं चित्रकाव्यत्वेन व्यपदिश्यते। ध्वनिगुणीभूतव्यङ्ग्यकाव्ययोरेवान्तर्भूतमिति सिद्धान्तस्तदभिमतः। 'तच्चित्रं यत्र वर्णानां खड्गाद्याकृतिहेतुता'। वर्णानां सज्जाविशेषेण तदनुपातेन रेखांकने कृते खड्गपद्माद्याकारप्रतीतिश्चेत् तदा चित्रमलंकारःसम्पद्येत। उक्तञ्च तेन 'सम्भाविनोऽप्यन्ये प्रभेदाः शक्तिमात्रप्रकाशका न तु काव्यरूपतां दधतीति न प्रदर्श्यन्ते। अन्ये सम्भाविनो बन्धाः प्रोक्ता अग्निपुराणे यथा—

बाणबाणासनव्योम-खड्गमुद्गरशक्तयः।
मृदङ्ग-पद्मशृङ्गारदम्भोलि-मुसलांकुशाः॥

बाणधनुराकाशखड्गमुद्गरशक्तिमृदङ्ग (मुरज)-पद्म-गजसज्जा (शृङ्गार) वज्रमुषलांकुशाकृतीनां बन्धानामुल्लेखो दृश्यतेऽग्निपुराणे।

साहित्यदर्पणकृतस्तु चित्रकाव्यनाम्ना तृतीयं काव्यभेदं नाङ्गीकृतवन्तः। ते तु ध्वनिगुणीभूतव्यङ्ग्यभेदेन द्विविधमेव काव्यमूरीचक्रुः। यतस्तन्मते रस एव काव्यस्यात्मा, यदि कथञ्चिदपि रससम्बन्धो नोपलभ्येत कुत्रचित् काव्ये, तदा आत्मसम्बन्धहीन-नरशरीरस्य मनुष्यनामवत् रससम्पर्कशून्ययोः शब्दार्थयोः काव्यसंज्ञाप्रदानमत्यन्तमसङ्गतम्। यदि तत्र किञ्चिदपि रसास्तित्वमङ्गीक्रियेत तदा तयोः सर्वथा अव्यङ्ग्यत्वं न कल्पयितुं शक्येत। अतो ध्वनिभिन्नं काव्यं सर्वमेव गुणीभूतव्यङ्ग्यश्रेणिमध्ये समापतेत्।

यथा रीतिविषयमवलम्ब्य नानाविधानि मतान्युपलभ्यन्ते, तथैव काव्यश्रेणिभेदमधिकृत्य मतभेदो वरीवर्ति। भारतेऽस्मिन् प्रदेशभेदेन रीतिगतं वैचित्र्यं स्वत एवोद्भूतमिति प्रतिभाति। गौडानां समासभूयस्त्वम् ओजोगुणानुरागित्वञ्च 'गौडेष्वक्षरडम्बरः' (हर्षचरितम्) ज्ञायते। काव्यादर्शेऽपि गौडी रीतिर्यथा प्रदर्शिता, तेन वैदर्भी रीतिरेवाचार्यदण्डिनः समधिकप्रीतिजननीति परिज्ञायते। एतेन यथा प्रतिप्रदेशं स्वतः स्फुरितेन रीतिरूपेण भाषा रूपान्तरं भजते, तथैव कवीनां रुचिभेदेन स्वाभाविकेन काव्यश्रेणिभेदोऽपि बहुरूपो दृश्यते।

ध्वनिप्रस्थानकृदानन्दवर्द्धनाचार्यः प्राह-
ध्वन्यात्मन्येव शृङ्गारे यमकादिनिबन्धनम्।
शक्तावपि प्रमादित्वं विप्रलम्भे विशेषतः॥

शृङ्गाररसस्तु ध्वनिप्राणभूतः, तादृशरसपूर्णरचनायां यमक-चक्रबन्धशब्दश्लेषादिसन्निवेशो नोचितः, शक्तिसत्त्वेऽपि कविस्तादृशं वैचित्र्यं परिहरेत्, विशेषतो विप्रलम्भशृङ्गारे। शक्तिप्रदर्शनार्थं यदि कविर्यमकादिनिवेशं कुर्यात्—तर्हि स प्रमादिमध्ये गणितः स्यात्। ध्वनिकृन्मते शृङ्गारादिरसे यमकादिनिवेशो नानुकूलो भवेत् कथञ्चिदपि।

परन्तु स्वयमानन्दवर्द्धनाचार्यो 'देवीशतकम्' नाम किञ्चिच्चित्रकाव्यं रचयामास। तस्मिन् ग्रन्थे बहवो यमकालंकाराः पद्मबन्धप्रभृतीनि चित्रपद्यानि विलोमानुलोमगतिपद्यानि च प्रदर्शितानि।

हेमचन्द्रश्च तदीयकाव्यानुशासन-नामकग्रन्थे भट्टलोल्लटस्य श्लोकमेकमुद्धृत्य ध्वनिकारमतमेव समर्थयामास।

यमकानुलोमतदितरचक्रादिभिदोऽतिरसविरोधिन्यः।
अभिमानमात्रमेतद् गड्डरिकादिप्रवाहो वा।

रुद्रट-रचितकाव्यालंकारग्रन्थस्य टीकाकारो नेमिसाधुः सिद्धान्तयति—"यमकश्लेषचित्राणि हि सरसे काव्ये क्रियमाणानि रसखण्डनां कुर्युः। विशेषतस्तु शृङ्गारकरुणयोः। कवेः किलैतानि शक्तिमात्रं पोषयन्ति न रसवत्ताम्। यदुक्तं यमकानुलोमेत्यादि, प्रयोगस्तु तेषां खण्डकाव्येषु देवतास्तुतिषु रणवर्णनेषु च।"*

* श्रीविष्णुपद भट्टाचार्य-सम्पादित—ध्वन्यालोकग्रन्थस्य द्वितीयोद्योते ४७–४८ पत्राङ्को द्रष्टव्यः।



अतएवानन्दवर्द्धनाचार्यो देवतास्तुतिमयं 'देवीशतकं' रचयामास। तत्र च तदीया यमकादिरचनाचातुरी परमोच्चकोटिमारूढा। आलोच्यमाने चित्रकाव्यविकासविवरणे 'सारस्वतशतकं' नामैतन्निबन्धरचयितुः कृतिः केषुचित् स्थानेषु दृष्टान्तरूपेणोल्लिखिता। तच्च 'सारस्वतशतकम्' सरस्वतीदेवतायाः स्तुतिविषयकं शतश्लोकात्मकं खण्डकाव्यम्। अत्र च बहूनां चित्रपद्यानां सन्निवेशः कृतः। साधकस्य पूजोपचारान् क्रमप्राप्तानवलम्ब्यैव चित्राणि नवनवकल्पनया विनिहितानि। व्यञ्जनया यथा तत्तद्द्रव्याणां बोधः, सरस्वतीस्तवस्याभिधया लभ्यो भवति प्रायेण तथा व्यवस्था कृता।

किरातार्जुनीये तथा शिशुपालवधे महाकाव्ये ये तावच्चित्रालंकाराः सन्निविष्टाः, सर्वे एव ते रणवर्णनाप्रसङ्गेनान्विताः। पूर्वेषां कवीनां दृष्टान्तानुसरणे नेदमेव प्रतिपन्नं भवति यथा चित्रकाव्यस्य कष्टकल्पितत्वेऽपि क्षेत्रविशेषे तदुपयोगित्वं सम्भवत्येव। अतएव रुद्रटाभिप्रायं प्रकटयता नेमिसाधुना यो राद्धान्तः प्रदर्शितः स तु समीचीन एव। कवीनां प्रतिभाविशेषं सूचयति किल चित्रकाव्यनिर्माणम्। तस्य यथा निरोधो न स्यात् तदर्थमेव प्राचीनैर्मनीषिभिरवहितैः क्षेत्रभेदव्यवस्था कृता॥

### चित्रकाव्यस्योदयकालः

आचार्यो दण्डी चित्रकाव्यमिति नामकरणमकृत्वापि काव्यादर्श शब्दालंकारेषु यमकगोमूत्रिकाबन्धार्द्धभ्रमकसर्वतोभद्रानामुल्लेखपूर्वमुदाहरणं दर्शयामास। यमकस्य च द्विषष्टिविधभेदं सोदाहरणं स्वकृतं प्रकटयामास। ततश्च स्वरवर्णगतं व्यञ्जनवर्णगतं वैचित्र्यमाश्रित्य बहुविधान्युदाहरणानि तथा कतिपयं प्रहेलिकास्वरूपं व्यतानीत्। एतेनानुमीयते यदाचार्यदण्डिनः प्राक्काल एव चित्रकाव्यकल्पनाबीजं कविहृदयभूमावुप्तमंकुरितञ्च।

महाकविर्भारविः किरातार्जुनीये ग्रन्थे काव्यादर्शधृतं गोमूत्रिकाबन्धमर्द्धभ्रमकं सर्वतोभद्रं च चित्रविशेषं रचयामास, तदतिरिक्तं चक्रबन्धं कञ्चन दर्शयामास। यमकानुप्रासादिषु यथा वर्णमात्रसञ्ज्ञया वैचित्र्यमुत्पद्यते, चित्रपद्येषु तथा रेखावर्णयोर्युगपन्मेलनेन चित्रविशेषस्य पद्यरूपस्य च निर्वाहात् विच्छित्तिविशेषः समुत्पद्यत इति तु प्रागेव प्रपञ्चीकृतम्। वैचित्र्यलोभादेव कविचित्तं नवीनेऽस्मिन् पथि विचरितुमारेभे। अनन्तरं महाकवि-माघप्रणीते शिशुपालवधग्रन्थे मुरजबन्धसंज्ञकं चित्रपद्यमेकमधिकं दृश्यते। सर्वेषु चित्रपद्येषु शब्दानामपूर्वः प्रभावः परिस्फुटो भवति, सत्यमाह महापण्डितो दण्डी—

इदमन्धंतमः कृत्स्नं जायेत भुवनत्रयम्।
यदि शब्दाह्वयं ज्योतिरासंसारं न दीप्यते॥

प्राचीनसाहित्यानां यथाशक्ति गवेषणया एतावदेव विज्ञायते—यद्दण्डी भारविर्वा चित्रकाव्यस्य प्रथमः प्रकाशकः। माघश्च तदनुवर्त्ती चित्रकाव्यसमर्थको नवीनमार्गप्रदर्शकश्च। अतएव मन्यते यत् ख्रीस्तीयषष्ठशतकाच्चित्रकाव्यस्योदयोऽभवदिति। †

### चित्रकाव्यस्य पूर्वरूपम्।

यद्यपि कविगुरुर्वाल्मीकिर्महाकविः कालिदासो वा चित्रालंकारयुक्तपद्यानि न निर्ममे, तथापि परिलक्ष्यते यद् वाल्मीकीयरामायणे स्वाभाविककवित्वस्फूर्त्तौ सत्यामपि स्वत एव क्वचित् क्वचिदनुप्रासाः पदमादधुः।

कालिदासस्य रघुवंशग्रन्थे विनायासेन स्वल्पायासेन वा रचितानां यमकानां विकाशो दृश्यते।

संस्कृतकाव्येषु यमकानामनुप्रासादीनाञ्चानुशीलनं यादृशं व्यापकरूपेणोपलभ्यते तत् विस्मयकरम्। पूर्वमेवोट्टङ्कितं यद् दण्डिना द्विषष्टिप्रकारो यमको दर्शितः। ईदृग्वर्णविन्यासानुशीलनपरायणे कविचित्तेऽभिनवरूपेण वर्णसन्निवेशकल्पनाकांक्षा समुदेतीति स्वाभाविकोऽयमग्रगतेः प्रकारः।

प्रथमतः सरलरेखामयचित्रचिन्तनं परिलक्ष्यते, यथा प्राचीनतमचित्राणि—गोमूत्रिकाबन्धः, अर्द्धभ्रमकं सर्वतोभद्रञ्चैतेषु सरलरेखांकनमेव दृष्टम्। पश्चाच्च क्रमशो नानाविधबन्धचित्राणां विकाशः समजनि। अतएव यमकानुप्रासादयः शब्दचित्रमध्ये परिगणिताः सूचयन्ति चित्रकाव्यस्य पूर्वावस्थाम्।

### भाषान्तरेषु चित्रकाव्यस्य दुर्घटत्वम्।

पूर्वमेवोक्तं यत् संस्कृतभाषाया महिमानन्यसाधारणः। संस्कृतभाषायामेव तथाविधयमकानुप्रासबन्धकाव्यादीनामुद्भवः सम्भाव्यते। हिन्दीभाषायां तथा वङ्गभाषायामनुप्रासे यमके चित्रपद्ये वा स्तोकशो वर्तमानेऽपि नास्ति तथा लोकचित्तरञ्जकत्वम्। प्रादेशिकभाषासु केवलं महाराष्ट्रभाषायां महाकविमोरपन्थ-कृते रामायणे महाभारते च यमकसन्निवेशः सर्वेषां विस्मयमुद्दीपयति। मन्ये तस्यैव मोरपन्थस्य (मयूरपन्थस्य) महिम्ना महाराष्ट्रदेशे देवी सरस्वती

† दण्डी ख्रीस्तीयपञ्चमशतक–सार्द्धषष्ठशतकयोरन्तरा प्रादुर्भूत इति मान्यवर-भारतरत्न-श्रीपाण्डुरङ्गवामनकाणेमहोदयानां सिद्धान्तः।
(Vide Introduction of Sahitya Darpana, p.p. XXXV (Second Edition.)



मयूरवाहनेति विभाव्यते। संस्कृत-भारत्या सह महाराष्ट्रभाषायाः सम्बन्धः सन्निहिततरः। आर्याच्छन्द उभयोरेव भाषयोः समानम्। ह्रस्वदीर्घोच्चारणञ्च वर्णानां तुल्यमेव। हिन्दीभाषायां वङ्गभाषायाञ्च संस्कृतशब्दव्यवहारबाहुल्ये सत्यपि वर्णोच्चारणप्रणाली प्रायशः प्राकृतप्रभावबद्धा। यद्यपि बहव एव भाषाकवयो दोधकतोटक-पञ्चचामरादिच्छन्दोभिर्ग्रथिताः कविता विरचयामासुः, तथापि तासां ह्रस्वदीर्घवर्णविशेषोच्चारणवैधुर्यं किञ्चिदुपेतुं शक्यते। महाराष्ट्रभाषायामुच्चारणप्रयत्न-साम्याद् भाषासमभाषाश्लेषादि-शब्दालंकारा न दुर्घटा भवन्ति।

अनुस्वारविसर्ग-व्यवहारहीनेषु हिन्दीभाषायां वङ्गभाषायां च तथाविधपद्येषु संस्कृतभाषायाश्छन्दःपालनपूर्वो भाषासमालंकारः प्रायशो न दृश्यते। 'सारस्वतशतके' दृष्टान्तरूपेण निबद्धः कश्चन श्लोकोऽत्र प्रदर्श्यते—

शुभ्रोज्ज्वले शतदले तव पादपद्म-<br>
शोभाधरे मधुरिमा भुवनप्रकाशे।<br>
ऊषा यथा किसलये तव देवि सद्यो<br>
भासे च खे शशिकला विकला सकाशे॥ (४६ पृष्ठे ९८ श्लोकः)

पद्यमिदं वङ्गभाषायां संस्कृतभाषायाञ्च समानम्। वङ्गभाषायां चतुर्दशपदीति चतुर्दशवर्णात्मकच्छन्दसा संस्कृतभाषायाञ्च चतुर्दशाक्षरवसन्ततिलकच्छन्दसा रचितम्।

### चित्रकाव्यस्य क्रमविस्तरः प्रभावश्च।

विच्छित्तिप्रियं किल मानवचित्तम्। विच्छित्तिसृष्टेरनिवार्यप्रेरणया चित्रकाव्यं क्रमाद् विस्तरं लेभे।

षष्ठशतकादारभ्य प्रथमं विकाशमानं चित्रकाव्यं क्रमवर्द्धमानं संस्कृत-साहित्यस्य सम्पद्विशेषं द्योतयामास। आचार्य-दण्डि-महाकवि-भारविमाघानामनन्तरं नवमशतके समभवदाचार्य आनन्दवर्द्धनः। आनन्दवर्द्धनः किल देवीशतके सर्वतोभद्रमर्द्धभ्रमकं मुरजबन्धं गोमूत्रिकाबन्धं च प्रकटयन् पूर्वानुसृतमार्गमेवानुवर्तयामास। अत्र चैकमष्टदलपद्मबन्धं रचयन् नवीनबन्धकाव्यसरणिं प्रदर्शयामास। गोमूत्रिकाबन्धाद् बन्धान्तरं कथमुत्पद्येत तत्कौशलमपि तेन दर्शितम्। गोमूत्रिकाबन्धद्वयं यदि संलग्नं क्रियेत, तर्हि जालबन्ध उत्पद्येत। गोमूत्रिकाबन्धस्य प्रथमवर्णमन्तिमवर्णञ्च पृथक् रक्षन् अनुष्टुब्वृत्तपद्यस्य वर्णषट्कं तत्क्रियया सन्निवेश्य तूणबन्धं लेभे कविः। (सारस्वतशतके ५८।५९ संख्यकचित्रद्वयं द्रष्टव्यम्)। यद्यपि ध्वनिकृदाचार्यः प्रतिपदं कविवृन्दं बोधयामास यत्

यमकादिनिबन्धाः शृङ्गारादिरसे परिहर्त्तव्याः। 'यमकादिनिबन्धेषु पृथग् यत्नोऽस्य जायते। शक्तस्यापि रसाङ्गत्वं तस्मादेषां न विद्यते' ॥ तथापि 'देवीशतक' प्रणेता चित्रकाव्यस्य गौरवं वर्द्धयामास।

अतः परं भोजराज-रचिते 'सरस्वतीकण्ठाभरणनामकेऽलंकारग्रन्थे बहुविधानां चित्रालंकाराणां सन्निवेशो दृश्यते। भोजराजशासनकाले (दशमशतके) यमकानुप्रासादीनामनुशीलनं परमोच्चकोटिमारूढम्। उक्तञ्च तेन–

उपमादि-वियुक्तापि राजते काव्यपद्धतिः।
यद्यनुप्रास-लेशोऽपि हन्त तत्र निवेश्यते ॥
कुण्डलादिवियुक्तापि कान्ता किमपि शोभते।
कुंकुमेनाङ्गरागश्चेत् सर्वाङ्गीणः प्रयुज्यते।

आनन्दवर्द्धनाचार्येण सहास्य सिद्धान्तभेद इव प्रतीयते।

भोजराजस्तु चित्रालंकारस्य समर्थक एवासीत्। चित्रस्य षड्विधभेदानूरीचकार भोजराजः। (१) वर्णचित्रम् (२) स्थानचित्रम्। (३) स्वरचित्रम् (४) आकारचित्रम् (५) गतिचित्रम् तथा (६)बन्धचित्रम्।

(१) वर्णचित्रस्य वर्णशब्देन व्यञ्जनवर्णमात्रं गृहीतम्। (२) स्वरचित्रे स्वरवर्णानां वैचित्र्यमङ्गीकृतम्। वर्णचित्रे त्वेकस्य द्वयोः त्रयाणां वा व्यञ्जनवर्णानां व्यवहारेण श्लोके निर्मिते सति यद्वैचित्र्यमनुभूयते तदेव वर्णचित्रम्। (२) स्थानचित्रं नाम चित्रं यत्र व्यञ्जनवर्णानामुच्चारणस्थानबहुत्वे सत्यपि तालव्यानां मूर्द्धन्यानां कण्ठ्यानां वा वर्णानां वर्जनेन पद्यानि विरच्यन्ते। (३) एकविधस्य द्विविधस्य त्रिविधस्य वा स्वरस्य व्यवहारेणाथवा सर्वविधस्वराणां नियमतः प्रयोगेन यदा किञ्चित् पद्यं निर्मीयते तदा स्वरचित्रं सम्भवति। (४) आकारचित्रं नाम पद्माद्याकारकल्पना यत्र चित्रे वर्तते तदेवाकारचित्रम्।

सरस्वतीकण्ठाभरणे षड्विधाः पद्मबन्धाः प्रदर्शिताः। देवीशतकादेव प्रथमपद्मबन्धस्य दृष्टान्त उद्धृतः। सरस्वतीकण्ठाभरणे पद्मबन्धानां प्रतिभेदं रचनानियमाः कारिकारूपेण प्रदर्शिताः। अत्राष्टदलपद्मबन्धास्त्रयः, चतुर्दलपद्ममेकम्, षोडशदलपद्ममेकं तथा 'राजशेखर-कमल' नामांकितमेकमष्टदलं दुष्करपद्मबन्धात्मकं पद्यं प्रकाशितानि। अतः परं चक्रबन्धोऽपि ग्रन्थेऽस्मिन् निविष्टः।"



(५) गतिचित्रं नामानुलोम-विलोमगतियुक्तं पद्यम्, अर्द्धभ्रमकं सर्वतोभद्रं तुरङ्गपदं च येषु पद्येषु प्रदर्श्यंते तेषु च गतिचित्रमाख्यातम्। कस्यचित् पद्यस्य दक्षिणभागतः प्रथमवर्णादारभ्य पाठो यदा पादद्वयस्यान्तिमवर्णपर्यन्तः प्रचलति ततश्च वामभागतो विपरीतगत्या पुनःपाठेन प्रथमवर्णावधि आगमनं स्यात् तदा पादचतुष्टययुक्तः श्लोक एकः सम्भवति। अथवा प्रथमवर्णादारभ्य पादचतुष्टयस्यान्तिमवर्णपर्यन्तं पठतो भवत्येकः श्लोकः, पुनरन्तिमवर्णाद् विपरीतगत्या प्रथमवर्णपर्यन्तमागच्छतो भवत्यन्यः श्लोकः। देवीशतके गतिचित्रस्योदाहरणानि बृहत्तरच्छन्दोरचितानि पद्यानि बहूनि दृश्यन्ते।

इतः परं चरमोत्कर्षो दृश्यते रामकृष्णविलोमाख्ये काव्ये। श्लोकानां दक्षिणतो वामगत्या पाठे रामचरितवर्णनं वामतो दक्षिणगत्या पठतो विभाति कृष्णचरितवर्णनम्। अष्टत्रिंशत् संख्यकपद्यात्मकमिदं काव्यमनन्यसाधारणकविप्रतिभापरिचायकमित्यत्र नास्ति सन्देहलेशोऽपि। एवमेव 'नलहरिश्चन्द्रीयं' तथा 'राघव-नैषधीयं' नाम द्व्यर्थबोधककाव्यं वरीवर्त्ति।

(६) बन्धचित्रेषु भोजराजेन चक्रबन्ध-दारबन्ध-व्योमबन्ध-मुरजबन्ध-गोमूत्रिकाबन्ध-गोमूत्रिकाधेनुबन्धाः प्रदर्शिताः। गोमूत्रिकाधेनुबन्धस्य वैशिष्ट्यमिदमेव यदस्माद् बन्धाप्रियमतो वर्णसंग्रहे कृते श्लोकवत्सः प्रसूतो भवति। एवञ्च तथाविधधेनुबन्धानां नामानि शतधेनुसहस्रधेन्वयुतधेनु लक्षधेनुकोटिधेनुबन्धा इति। एते च बन्धास्तत्तत्संख्यक-श्लोकतर्णकान् प्रसुवत इति नाम्नां सार्थक्यम्।

चतुर्दशशतके श्रीवत्सलाञ्छन-भट्टाचार्यकृते काव्यपरीक्षानामकेऽलङ्कारग्रन्थे चित्रालंकारस्योदाहरणं पद्मबन्धस्तथा सर्वतोभद्रमिति बन्धद्वयमेव प्रदर्शितम्। अस्यापि ग्रन्थकारस्य गतानुगतिकत्वमेव साधीय इति मन्यमानस्य काव्यप्रकाशकृन्मार्ग एवादर्शभूतो भाति।

सप्तदशशतके काश्मीरदेशीयः कविरवतारनामा किल 'ईश्वरशतकम्' नाम चित्रकाव्यं रचयामास। तत्र च शिवमहिमा वर्णितः। मन्ये देवीशतकमादर्शरूपं स्वीकृत्य कृतोऽयं ग्रन्थः। परन्तु बन्धानां वैचित्र्यमत्र समधिकमुपलभ्यते। बहूनां नवीनबन्धानामुद्भावनमत्र दृश्यते।

सर्वतोभद्र-गोमूत्रिका-मुरज-पद्म-वज्र-त्रिशूल-परशु-गदा-च्छुरिका-तूण - चक्रखड्ग-मुषल-धनुः-शर-डमरु-हल-नन्दिकावर्त्त-कुसुमोच्चय-काञ्ची - गजपदाश्वपदच्छत्रबन्धानामेकरूपेणानेकरूपेण च सन्निवेशाः सन्ति। पद्मबन्धप्रदर्शनादनन्तरमेव कञ्चिदेकं महादेवबन्धं विलोकयामः। ईश्वरः किल महादेवपर्यायशब्दः, ईश्वरशतकग्रन्थे महादेव-बन्धस्य प्रयोजनं कविचेतसि समुद्भूतम्। महादेवबन्धो नान्यत्र कुत्राप्युपलभ्यते सम्भाव्यते वा। कस्मिन्नप्यलंकारग्रन्थे देवमूर्त्तिमवलम्ब्य

रचितस्य कस्यापि बन्धस्य विवरणं न लब्धम्। अस्य च महादेवबन्धस्य कीदृगंकनं भवेदिति संकेतोऽपि न प्रदत्त ईश्वरशतकग्रन्थे तट्टीकायां वा। अत्रापि यमकानुप्रासानां बाहुल्येन विकाशो दृश्यते।

महादेवस्याङ्गभूषणं धारणीयास्त्रग्रामञ्चाधिकृत्य कृतो बन्धसमूहो नोपेक्षितस्तच्छन्दनामसङ्गतिरक्षणाय। परन्तु बन्धानामेतेषां नियमा न प्रदर्शिताः। मूलग्रन्थेन सह स्थितायामपि टीकायां कविकृतबन्धचित्राणां नियमविषयको न कोऽपि विचारः प्रकटितः। ईश्वरशतके सर्पबन्धस्य नोल्लेखो दृश्यते। महादेवस्याङ्गभूषणत्वेन सर्पस्य सम्बन्धो यद्यप्यपरिहार्यो भवति तथापि तद्बन्धो नोपलभ्यते। चित्रांकनविद्यायास्तथा कविकल्पनायाः क्रमविकाशवशात् सर्पबन्धस्य जटिलरेखांकनमर्वाचीने काले कल्पितमपि तदानीं सप्तदशशतके तादृशवक्ररेखाघटितमंकनं न प्रादुरभूदित्यनुमातुं शक्यते।

षोडशशतके कविकर्णपूररचितेऽलंकार-कौस्तुभनामकग्रन्थे बहूनां चित्रपद्यानां सन्निवेशो दृश्यते। अलंकारकौस्तुभस्य वैशिष्ट्यमेतावदेव यत् सर्वेषामलंकाराणां कविना स्वयं रचिता दृष्टान्ताः सन्निवेशिताः। सरस्वतीकण्ठाभरणे तु पूर्वेषां कवीनां ग्रन्थेभ्यः संकलिताः किल दृष्टान्ताः। अलंकारकौस्तुभे मुरजसर्वतोभद्र-गोमूत्रिकापताकाछत्रशार्ङ्गबन्धास्तथा बहवो यमकादयोऽलंकाराः प्रदर्शिताः।

दाक्षिणात्यकवीनां बन्धकाव्यमतीव विचित्रम्। सप्तदशशतके वेङ्कटाध्वरिविरचिते लक्ष्मीसहस्रनामकाव्यग्रन्थे पञ्चपञ्चाशत्संख्यकचित्रस्तवकः परमानन्ददायको दृश्यते। कविवेंकटेश्वरप्रणीते चित्रबन्धरामायणनामके ग्रन्थे बहुविधानि चित्रकाव्यानि निबद्धानि। सन्ति कंकणबन्धश्छत्रबन्ध आन्दोलिकाबन्धादयश्च। वेंकटाचार्यप्रणीते कमलमालिकास्तोत्रनामककाव्ये पद्ममालाबन्धाख्य एको बन्धोऽभिनवरूपमादधाति। पञ्चविंशतिचतुर्दल-पद्मानां संहत्या निर्मितोऽयं दुष्करो बन्धः। (सारस्वतशतके ३७ बन्धचित्रं दृष्टव्यम्)

कविवरवेंकटेशस्य रामचन्द्रोदयनामके काव्ये कंकणबन्धनामकं किञ्चन विचित्रं बन्धचित्रं वर्तते। विचित्रतरं तु कविकृष्णमूर्तिकृतं 'कंकणबन्धरामायणं' नाम काव्यम्। तच्चैकमेव पद्यमष्टाविंशत्यधिकशतसंख्यकपद्यानां प्रकाशकं भवति। नारीहस्ताभरणं किल कंकणं तच्च गोलाकृति, छन्दश्च विद्युन्मालाख्यं द्वात्रिंशद्गुरुवर्णघटितम्। यथा दक्षिणावर्तेन तथा वामावर्तेन प्रथमवर्णाद् द्वितीयादिवर्णक्रमाद् वा आरभ्य गोलाकारं कंकणं परावृत्त्यारब्धस्थानागमेनैकैकः श्लोक उत्पद्यते। अनया रीत्या शताधिकाः श्लोका लभ्यन्ते। अयं बन्धस्तु दुर्बोध इत्यत्र संशयो नास्ति, कविकल्पनाशक्तेरतिशयोऽपि विस्मयावहः।*

* यथा—रामानाथा भाराधारा धाराधारा गोधाधारा।
धाराधारा भीमाकारा पारावारा सीतारामा॥
(सारस्वतशतके १७ संख्यक-चित्रं द्रष्टव्यम्)



इत्थं प्रतीयते यत्समग्रे भारते संस्कृतवाङ्मयराज्ये बन्धकाव्यस्य नात्यल्पः प्रभावो दृष्टः। विस्मयकरन्त्विदं यद् 'लीलावती'-नामक-ज्योतिषग्रन्थस्य बुद्धिविलासिनी-संस्कटीका-प्रणेता गणेशदैवज्ञस्तदीयमङ्गलाचरणश्लोकेषु एकत्र पद्मबन्धस्य निवेशं कृतवान्।

चित्रकाव्यस्येतिहासपर्यालोचनायां कृतायामिदमेव प्रतिभाति यत् प्रथमतः सरलरेखाघटित-चित्रांकनादेव बन्धचित्रस्य प्रथमस्तरः समजनि। अर्द्धभ्रमक-सर्वतोभद्रमुरजबन्धाः सरलरेखासम्भूताः। महाकविभारवेश्चक्रबन्धस्तु वृत्तस्यांकस्य तथा सरलरेखाया मेलनेन जात इति द्वितीयस्तरः।

देवीशतकग्रन्थे प्रथमं तावत् वक्ररेखामयः पद्मबन्ध उपलभ्यते। पद्मबन्धस्य विकाशात् परं क्रमात् सप्तदशशतकपर्यन्तं बहुधा चित्रकाव्यस्य कल्पनाचातुर्यं विद्वज्जनमनोविनोदहेतुरासीत्। सरस्वतीकण्ठाभरणे संकलितानां बन्धचित्राणाम् परिज्ञानेन च स्पष्टमुपलभ्यते यन्नवमशतकात् परं भोजराजशासनकाल-(एकादशशतक) पर्यन्तं बन्धचित्राणामनुशीलनं क्रमवर्धमानं समजनि। ततश्च दाक्षिणात्ये काश्मीरदेशे च बहुविधानां वक्ररेखाघटितानां नव-नव-चित्राणामाविर्भावेन चित्रकाव्यराज्यं सुसमृद्धमासीत्। अस्माकं ज्ञानपथपतिता ज्ञानपथातीताश्च बहवोऽप्रसिद्धाः कवयश्चित्रकाव्यरचनया स्वसन्तोषमात्रं भजमाना अपि दृश्यकाव्यस्याकर्षण हेतुतां प्रमाणयामासुः।

### बन्धकाव्यस्य रचनानियमाः।

बन्धकाव्यस्य रचनायां के नियमाः काश्च रीतय इत्यत्र नास्ति निर्दिष्टः कोऽप्यनुशासन-ग्रन्थः। तथापि नानाग्रन्थेभ्यो लब्धानां प्रकीर्णानां नियमानां संकलनमत्र क्रियते। टीकाकृतां वरिष्ठेन मल्लिनाथेन किरातार्जुनीय-ग्रन्थस्य पञ्चदश-सर्गस्थदशमश्लोकस्य टीकायां प्रथमोऽयं नियमः प्रदर्शितः।

रलयोर्डलयोस्तद्वज् जययोर्बवयोरपि। शसयोर्नणयोश्चान्ते सविसर्गाविसर्गयोः। सबिन्दुकाबिन्दुकयोः स्यादभेदेन कल्पनम्॥

साहित्यदर्पणे कथितम्—'यमकादौ भवेदैक्यं डलोरलोर्बवोस्तथा।' मल्लिनाथसूरिः किरातार्जुनीये १४ सर्गस्य १४ श्लोके व्याख्यातवान्—यथा

'अन्त्यस्तकारस्तु न दोषावहः, नान्त्यवर्णस्तु भेदक इत्यनुज्ञानात्।
पदान्तस्थितस्तकारो हलन्तो न वर्णान्तरं परन्तु पूर्ववर्णस्वरूपमेव'॥
मुरजबन्धमधिकृत्य सूरिणा मल्लिनाथेन शिशुपालवधमहाकाव्ये १९ सर्गस्य २९ श्लोके लिखितम्।

स्वर्वासिनां देववाणी सुधास्वादप्रदा भवतु नाम, मनुष्याणां विशेषतो निर्धनानां किं सरस्वत्युपासनया? वरमाराध्या पद्मालयेति संशयानं प्रत्याह—

यस्याश्चरणराजीव-शरणापन्नजीवनाः ।
निःस्वा अपि न विधान्तर्भवन्ति विरसान्तराः ॥४॥

सर्वं शून्यं दरिद्रस्येति निःस्वानां वैरस्यं सर्वविदितम्। तथापि पद्मालया चलेति व्यपदिश्यते, कदाचिल्लब्धानामपि धनानां न स्थैर्यमाशास्यते। विनष्ट-धनानां मनुष्याणामाधिर्महानेव जायते, मृत्युवरणमपि सम्भवति। अतो धृति-रालम्बनीया। धृतेर्जीवनहेतुत्वं मनुनाप्युक्तम्—'धृतिर्भैक्ष्यं कुसीदञ्च दशजीवन-हेतवः' (१०।११६) 'धृतिः सन्तोष' इति मेधातिथिः। सा धृतिः सारस्वती मूर्तिः। लक्ष्मीर्मेधा धरा पुष्टिर्गौरी तुष्टिः प्रभा धृतिरिति तनुष्वष्टासु तदन्त-र्भावात्। धृतिरूपायास्तस्याः पादपद्मयो नित्यसरसत्वात् तच्छरणमापन्नानां नास्त्येव वैरस्यसम्भावना। आदेवं मर्त्या दरिद्रा अपि विद्यामुपास्य सारस्यमनु-भवन्तीति प्रत्यक्षतः सिद्धा, सा कृपास्वभावा कथं नोपास्या? वृत्त्यनुप्रासः ॥४॥

तथापि देवतोपासनायां कालाकालादिविचार आवश्यकः, कथं तद्विचार विनैव सारस्वतोपास्तिसम्बन्धी निबन्धोऽयमारभ्यत इत्याह—

कवयो न वयोवारं गणयन्ति धनं न वा ।
विमाना इव मायन्ति श्रीकान्तपदसङ्गती ॥५॥

कवयः, वयः-जीवनकालम्, वारम्-अवसरं लग्नमुहूर्तादिकमित्यर्थः। धनं शरी[रस्य] सुस्थत्वासुस्थत्वादिकं न गणयन्ति चिन्तयन्ति। श्रियः सरस्वत्याः कान्ता[नां] सङ्गतौ मिलने अथवा श्रिया अर्थादिसम्पदा कान्तानां सुकुमाराणां पदानां सङ्ग[तौ] सुप्रयोगे मायन्ति उत्साहिता भवन्ति। कीदृशाः कवयः? विमाना इव। विमाना व्योमयानानि अपि वयोवारं पक्षिसमूहं तत्कृतबाधां वा। धनं मे[घं] न गणयन्ति उपेक्षन्ते। श्रीकान्तो विष्णुः तत्पदं विष्णुपदमाकाशं तत्र सङ्ग[तौ] सम्यक् सञ्चारे मायन्ति। पूर्णोपमालंकारः ॥५॥

सरस्वती तूपास्या, तदुपासना सफला विफला वेति संशये तद्व्युदा[साय] दृष्टान्तानाह—

पदेऽनन्तगुणे यस्या वल्मीकः स कृपाधने ।
धृतान्तरो धनुश्चित्रं रामवृत्तमकल्पयत् ॥६॥



यस्याः सरस्वत्याः अनन्तगुणे कृपाधने पदे धृतान्तरः स वल्मीकः धनुश्चित्रं रामवृत्तमकल्पयत्। इत्यन्वयः। अनन्ताः असीमाः गुणाः वात्सल्यादयो यत्र तत् तस्मिन्, कृपाधने सान्द्रदयायुक्ते पदे चरणे धृतान्तरः लग्नचित्तः समाहित-हृदय इत्यर्थः। स वल्मीकः वाल्मीकिमुनिरिति (विश्वः), धनुषा हरधनुर्व्यापारेण चित्रं विस्मयकरं रामवृत्तं रामचरितं रामायणाख्यम् अकल्पयत् रचयामास। वाल्मीकिं प्रति सरस्वत्या दयोदयवार्त्ता रामायणे प्रसिद्धा। अतः सफलोपासना।

अथच वल्मीक उपीकाकृतमृत्तिकास्तूपः सातपो मेघो वा। सकृपाधने सस्य ईश्वरस्य ('सः स्याद्विष्णौ हरे सर्पे' इति भरतैकार्थसंग्रहः) कृपारूपमेघसहिते अनन्तगुणे अनन्तः आनन्त्यं असीमत्वं गुणो यस्य एवम्भूते पदे आकाश इत्यर्थः धृतान्तरः गृहीतावकाशः रामं मनोज्ञं वृत्तं गोलाकारं चित्रं नानावर्णमयं धनुः करोतीति वस्तुध्वनिः। 'वल्मीकाग्रात् प्रभवति धनुः खण्डमाखण्डलस्ये'ति स्मरणात् ॥६॥

उपासना सफलेति बहुभिर्दृष्टान्तैर्द्रढयति—

यस्याः शुद्धपदाभ्यासाद्व्यासो वेदार्थभापकः ।
व्यधत्त भारतं वृत्तं सूत्रैश्चात्मानमद्वयम् ॥७॥

यस्याः देव्याः शुद्धपदाभ्यासात् शुभ्रचरणयोः समीपस्थितिहेतोः अथच शुद्धानां दोषरहितानां पदानां वैदिकानामित्यर्थः, अभ्यासात् आवृत्तिहेतोः वेदार्थभापकः चतुर्वेद-विभागरूपार्थस्य वेदार्थरूपपुराणानां च भापकः कथको व्यासः कृष्णद्वैपायनो भारतं महाभारतीयं वृत्तं व्यधत्त रचयामास, सूत्रैः ब्रह्मसूत्रैः अद्वयं सजातीयविजातीय-द्वितीयरहितं जीवात्मपरमात्मनोरभेदसूचकमित्यर्थः, आत्मानम् अद्वयं परं ब्रह्मेति व्यधत्त व्यवस्थापयामास च ॥

अथच व्यासो वृत्तमध्यगतः सरलरेखाविशेषः वृत्तकेन्द्रबिन्दुतः सूत्रैः सूत्रपातैः आत्मानं स्वम् अद्वयम् एकं भारतं प्रभायुक्तं वृत्तं गोलं चकारेति चित्रम्! अपिच वेदार्थभापकः सर्ववेदसिद्धान्तप्रकाशको ब्रह्मसूत्ररचनया व्यास आत्मानम् अद्वयम् उपमारहितं चकारेति ध्वनिः ॥ वेदान्तस्य सर्वजनमान्यत्वात् ॥७॥

यस्याः स्वच्छरुचेर्वाचः स्वच्छन्दपदसंग्रहात् ।
कालिदासोऽप्यभूदाशु शुभ्रस्य यशसः प्रभुः ॥८॥

स्वच्छा निर्मला रुचिः कान्तिः इच्छा-विशेषश्च यस्याः सा तस्याः वाचः वाग्देवतायाः स्वच्छन्दः स्वेच्छया कृतः पदसंग्रहः चरणयोश्चसंग्रहणं तस्माद्धेतोः, मूर्खस्य कालिदासस्य वाग्देवतोपासनयैव कवित्वसिद्धिरभूदिति किंवदन्ती।

अथच स्वच्छन्दः अक्लेशकल्पनाबलाल्लब्धः यः पदसंग्रहः तत्तत् काव्यघटकपदानां सम्न्वयः तस्माद्धेतोः। कालिदासः तन्नामा महाकविः कालिदास इति संज्ञाया-मीकारस्य ह्रस्वत्वं बाहुल्यात्। अथच काल्याःदासः, काली कालाञ्जनी परीवादो वा तस्या विधेयोऽपि शुभ्रस्य यशसः प्रभुरभूदिति विषमालंकारः। तद्रचितग्रन्थेषु क्वचिसङ्गतमुष्ठुपदप्रयोगो दृश्यते, तेन शुभ्रस्य लेशतोऽपि कलङ्का-लिमरहितस्य यशसः प्रभुरित्यनेन कवेरुत्कर्षोऽपि व्यज्यते।

> यस्या नाटयरसावेशादट्टहाससितीकृतः।
> तमश्छन्नोऽपि भासोऽथ भारतोपरि भासते ॥९॥

नाट्यरसे च आवेशः आसक्तिः तज्जनितो वाग्देव्या अट्टहासः तेन सितीकृतः शुभ्रीकृतः भासः तन्नामको महाकविः कालिदासपूर्ववर्ती, तमश्छन्नोऽपि विस्मृतिरूप-मोहावृतोऽपि भारतोपरि भा-रतानां दीप्तिमतां प्रतिभाशालिनां श्रेष्ठतया भासते दीप्यते। भासः तमश्छन्न इति विरोधाभासः। यथा मध्याह्नकाले द्विगुणीभूत-सौरालोकः सूर्यः कदाचिद् राहुग्रस्तबिम्बोऽपि उज्ज्वल एव भासते, तथा भासः स्वरूपतोऽपरिज्ञातोऽपि तद्रचिततया सम्भाव्यमानाः केचन नाटकग्रन्थाः भारते परमादरेण गृह्यन्त इति ध्वनिः। 'भासो हासः' सरस्वत्या इति प्राचीनपद्यस्मरणेन वाग्देवताया अट्टहास इह वर्णितः ॥९॥

उपासनासिद्धौ दृष्टान्तमपरमाह—

> यत्पादाब्जरजोलिप्तो बाणश्चाप गुणोन्नतः।
> कलकण्ठकविव्रातमर्म हार्दं गतः स्वतः ॥१०॥

यत्पादाब्जरजोलिप्तो बाणः तदाख्यो महाकविः गुणोन्नतः—गुणैः रचना-शक्तिविकासकैरित्यर्थः। उन्नतः कविषु विशिष्टमुच्चस्थानमधिकृत्य स्थितः कलकण्ठकविव्रातमर्म गतश्च। हार्दं स्वत आप। कलः अव्यक्तमधुरः प्रशंसागद्गदमयः शब्दः कण्ठे येषां ते तादृशानां कवीनां व्रातस्य समूहस्य मर्म रसमयगद्यरचना-नैपुण्यात् हृदयाभ्यन्तरं प्रविष्टः सर्वदा कविभिः स्मृत इत्यर्थः। तेषामेव हार्दं प्रेम च स्वतः स्वगुणेनैव आप लेभे। बाणोच्छिष्टमिदं जगदिति प्रसिद्धिः। अथच रजोलिप्तः शरः चापगुणे धनुर्ज्यायाम् उन्नतः ऊर्ध्वमुखः सन् हार्दं हृत्सम्बन्धि कलकण्ठकानां (स्वार्थे क प्रत्ययः) वीनां पक्षिणां व्रातस्य मर्म सन्धिस्थानं स्वतो विना प्रयत्नविशेषं गत इति वस्तु व्यज्यते ॥१०॥



उपासनया लब्धा सारस्वती कृपा महतीं सिद्धिं दिशति—

> यदीयकरुणालेशादल्पक्लेशादवाप सः।
> भवभूतिर्भवे भूतिं शाश्वतीं कीर्तिभास्वतीम् ॥११॥

कविर्भवभूतिः भवे संसारे कीर्तिभास्वतीं यशःप्रोज्ज्वलां शाश्वतीं चिरन्तनीं भूतिं सिद्धिसम्पत्तिमवाप। अल्पक्लेशादिति भवभूतेः कृतित्रयं वीरोत्तररामचरिते मालतीमाधवञ्चेति ज्ञायते। भासकालिदासाद्यपेक्षया कृतेरल्पत्वमिति भावः। यशस्तु नाल्पमिति बोध्यम् ॥११॥

> माधवोदयसम्बन्धा माघे सिद्धेव भारवौ।
> सा महीमहिता वाणी नव-श्रीहर्षवाणिनी ॥१२॥

माघभारवि-श्रीहर्षादीनां महती सारस्वती सिद्धिजतिति विवृणोति। माधवः मधुसम्बन्धी वसन्तकालीनो य उदयः आगमः तत्र सम्बन्धो यस्याः सा ईदृशी, माघे सिद्धा परिपक्वा रवौ भाः रविनिष्ठा द्युतिरिव (मकरे प्रखरो रविरिति स्मरणात्) वाणी नवश्रीहर्षवाणिनी नवा श्रीः शोभा नवो हर्षश्च तयोः वाणिनी दूती प्रथमागमज्ञापिका सती मही-महिता भूतले पूजिता भवतीति शेषः। मधुऋतोरारम्भे माघशुक्लपञ्चमीदिने सरस्वत्याः, पूजनोत्सवो भवतीति सूचितम्। अथच माधवः कृष्णः तस्य उदयः अभ्युदयः तेन सम्बन्धो यस्यां सा, माघे माघप्रणीत-शिशुपालवधाख्ये महाकाव्ये श्रीकृष्णाभ्युदयसम्बन्धिनी सिद्धा प्रसिद्धा वाणी। तथा मा लक्ष्मीः राज्यलक्ष्मीः तस्या धवः पतिः युधिष्ठिरादिः तदुदयस्य सम्बन्धो यस्यां सा तादृशी, भारवौ भारविप्रणीतकिरातार्जुनीयनामके महाकाव्ये पाण्डव-राज्यलक्ष्मीपति-युधिष्ठिरवृद्धिसम्बन्धिनी सिद्धा वाणी तथा नवस्य ताभ्यामर्वाचीनस्य श्रीहर्षस्य तन्नामकमहाकवेः वाणिनी नर्तकी (इव मनोज्ञा) वाणी मह्यां पृथिव्यां महिता समादृता। शब्दार्थक वण धातोर्णिनि वाणिनी। अमुष्य विद्या सन्तापनर्तकीति नैषधकाव्यस्मरणात् ॥ उपमा, श्लेषश्च ॥१२॥

> तत्कारुण्यकणाल्लोको द्विलोचनविलक्षणः।
> अन्धतां वन्ध्यतां नेतुं तत्त्वे षड्दर्शनीमितः ॥१३॥

द्विलोचनविलक्षणो लोकः तत्त्वे अन्धतां वन्ध्यतां नेतुं तत्कारुण्यकणात् षड्दर्शनीमितः इत्यन्वयः। लोको द्विलोचनोऽपि तत्त्वविषये दर्शनाक्षम इति लोचनद्वयस्य निष्प्रयोजनस्थितिकत्वम्। 'विलक्षणं मतं स्थानं यद्भवेन्निष्प्रयो-

जन'मिति भागुरिः। द्वाभ्यां लोचनाभ्यां विलक्षणः लोकः तत्त्वे यथार्थज्ञानविषये अन्धतां दर्शनाक्षमतां वन्ध्यतां व्यर्थतां नेतुं दूरीकर्तुमित्यर्थः। एतेनाभिधेयं प्रदर्शितम्। सारस्वतानुग्रहलेशवशात् षड्दर्शनी न्यायवैशेषिकसांख्ययोग-पूर्वोत्तरमीमांसारूपदर्शनषट्कम् अथच नयनषट्कम् इतः प्राप्तः इवेति प्रतीयमानोत्प्रेक्षा। नेत्रद्वयेन यावद् द्रष्टुं शक्यते लोचनषट्केन तदधिकं दृश्यत इति सम्भावनामात्रं व्यज्यते ॥१३॥

> तामहं तामसे चित्ते नित्यतामरसासनाम्।
> सारदां सारदज्योतिर्न संसारमथार्थये ॥१४॥

(स्वस्तिकाबन्धो यमकश्च) **चित्रसंख्या–२**

सरस्वत्युपासनायाः फलन्तु नाना, कतमफललाभाय ग्रन्थकर्तुरयमुद्यम इत्याह—तामहमित्यादि। अहं नित्यतामरसासनां सततं हृदयपुण्डरीकवासिनीं तां सारदां सरस्वतीं तामसे तमोऽज्ञानं तद्बहुले चित्ते सारदज्योतिः सारं बलं ददातीति सारदं ब्रह्मज्योतिः कैवल्यमित्यर्थः। अर्थये याचे। अथ संसारं मिथ्याज्ञानजन्यवासनाबन्धनं पुनर्भवमिति यावत्। न अर्थये–इत्यनेन सम्बन्धः। अनेन प्रयोजनं व्याख्यातम्।

शुभकर्मणि सर्वकार्यारम्भे पटादिषु स्वस्तिकाङ्कनं क्रियत इत्यत्रापि तद्बन्धस्य प्रथमोपस्थापनम्। नवीनोऽयं बन्धः ॥१४॥

तदेव प्रयोजनं विवृण्वन्नाह—

> न कवित्वं न वित्तं वा न यशो नयशोभितम्।
> कामये कामहानाय कामहं काममाश्रये ॥१५॥

(यमकः)

अहं कवित्वं न कामये न वा वित्तं धनं नयशोभितं शास्त्रज्ञानशोभानि यशो वा न कामये। इति वदतोऽपि कामना दुस्त्यजा–(अतः) कामहानाय संसारमूलभूत-भोगेच्छानिवृत्तये कामम् अनुमतौ काम् आश्रये? वित्तैषणां लोकैषणां च परिहर्तुं कामस्य तत्त्वज्ञानमयीं त्वामृते नास्ति मे शरणमन्यद् इति भावः। प्रथमे द्वितीये चरणे च यमकः। अतः सरस्वत्युपासनावश्यं कार्या ततश्च प्रथमः संकल्पः ॥१५॥

स्वस्तिकाबन्धः
चित्रसंख्या-२

नित्य
ते
वि
सी
ता
म
सनां
सा
र
हं
द
ज्यो
ति
र्न सं
सा
र
दां
म
था
र्थ ये

[ तामहं तामसे चित्ते—इत्यादि श्लोकः—१४ ]
पृष्ठम्—८

इदानीं संकल्पे कर्तव्ये मुरजशङ्ख-घण्टावन्धद्योतितध्वनिविशेष-मभिलष्याह—

> वरदा महदारम्भपारदानमदारता ।
> तारदामभृदागच्छ सारदा महदागमा ॥१६॥

(मुरजबन्धः) **चित्र संख्या–३**

(हे) तारदामभृत् ! (त्वं) वरदा महदारम्भपारदानमदारता । (त्वं) सारदा महदागमा आगच्छ । इत्यन्वयः ।

हे तारदामभृत् ! रजतवत्सितमाल्यधारिणि ! त्वं वरदा वरदायिनी महतां सतां य आरम्भः कार्यं तस्य पारदानं समाप्तिसाधनं तस्य मदः हर्षः उत्साहो वा तत्र आरता लग्ना भवसि । त्वमेव चिन्मयी तथा आनन्दमयी सती सतां कार्यं साधयसीत्यर्थः । त्वं महदागमा सारदा, महदः उत्सवप्रदः आगमः आगमनं यस्याः सा अथच आगमः शास्त्रमेव विदुषां प्रीतिप्रदः । सारदा सरस्वती बलप्रदा च त्वम् आगच्छ मम मनसीत्यर्थः । संकल्पः किल मनोभूमावभीष्टावतारणम् । 'संकल्पो वाव मनसो भूयान् यदा वै संकल्पयतेऽथ मनस्यथ वाचमीरयति' इत्यादि श्रुतेः (छा० उप० ७।४।१)

तारशब्देनोच्चध्वनिः, दामभृच्छब्देन च दामवद्धवाद्यं तथा महदशब्देनोत्सव-प्रदत्वं सूच्यते । एतैः शब्दविशेषैर्मुरजरूपवाद्यविशेषो व्यज्यते ॥१६॥

'दूरङ्गमं ज्योतिषां ज्योतिरेक'मिति सूचयन्नाह—

> भातु कापि ललिताकृतिः सिता तापहा प्रशमदीपिका तु भाः ।
> दीर्घदर्शिनयनैकतारका तारकान्तकलया लयादृता ॥१७॥

(शङ्खबन्धः) **चित्र संख्या–४**

संकल्पकाले शङ्खध्वनिराचारात् क्रियत इति शङ्खबन्धस्य निवेशः । ललिताकृतिः सिता तापहा प्रशमदीपिका तारकान्तकलया दीर्घदर्शिनय-नैकतारका लयादृता कापि तु भाः भातु । इत्यन्वयः । ललिताकृतिः मनोहररूपा 'आनन्दरूपममृतं यद्विभाति' इति (मुण्डक २।२।७) श्रुतेः । सिता–'अन्तःशरीरे ज्योतिर्मयो हि शुभ्रो यं पश्यन्ति यतयः क्षीणदोषाः' इति, (मुण्डक ३।१।५) तापहा–'भवतापवारिणीत्यर्थः ।' 'क्षीयन्ते चास्य कर्माणि तस्मिन् दृष्टे परावरे' (मुण्डक २।२।८) इति, प्रशमदीपिका शान्तिसमुद्बोधिका 'सम्प्राप्यैनमृषयो ज्ञानतृप्ताः कृतात्मानो वीतरागाः प्रशान्ताः' (मुण्डक ३।२।५)

इति श्रुतेः। तारकान्तकलया तारं प्रणवः अथवा तारं रजतं तस्य या कान्तकला मनोहरस्वरूपं तेन हेतुना तदुपलक्षिता वा, तथाच श्रुतिः—'य ओंकारः स प्रणवो यः प्रणवः स सर्वव्यापी यः सर्वव्यापी सोऽनन्तो योऽनन्तः स तारं यत्तारं तच्छुक्लम्' इति। (अथर्वशिर उप.) अतएव लयादृता लये प्राणोत्क्रमणकाले आदृता, विदेहमुक्तिवादिनां मते प्राणत्यागकाल एव तत्त्वज्ञानलाभो भवतीति तत्काले देवीस्वरूपज्ञानमावश्यकमिति भावः। दीर्घदर्शिनयनैक-तारका दीर्घदर्शिनः पण्डिताः तेषां नयनैकतारका सर्वदा लक्ष्यविषय इत्यर्थः। ज्ञानरूपा वाणी विदुषां जीवितकालेऽपि सर्वदा हृदयस्थेति भावः। तादृशी कापि तु भाः अपूर्वं ज्योतिः सारस्वतं मह इत्यर्थः भातु मम मनसि प्रकाशताम्। एतेन शङ्खनामकवस्तुनोऽपि व्यञ्जकत्वम्। तथाहि शङ्खः सितस्तापहा शीतलः सुन्दराकृतिः, दीर्घदर्शिनीनां गृहिणीनां नयनमणिरूपः। प्रतिशुभकार्यं शङ्खध्वनेरवश्यकर्तव्यत्वात् सर्वदा दृष्टिपथस्थितः, उच्चशब्दजनकः आलयेषु गृहेष्वादृतश्च, नवीनप्रकारोऽयं बन्धः ॥१७॥

संकल्पकाले घण्टाध्वनिरपि शास्त्रसदाचारानुमोदित इति घण्टाबन्धं तनुते—

सुहृत्सदानन्दनतारदानाद् विधेर्जगत्सृष्टिविधौ हि देवि।
विदे त्वमेहि स्फुरदात्मवीणा-नादारता नन्दनदासहृत्सु ॥१८॥

(घण्टाबन्धः) **चित्र संख्या–५**

हे देवि! विधेः ब्रह्मणः जगत्सृष्टिविधौ जगन्निर्माणकर्मणि सदा आनन्दन-तारदानात् आनन्दकरस्य प्रथम-परमाणु-स्पन्दननिदानस्य प्रणवझंकारस्य वितरणात् सुहृत् असि विधेः सहायो भवसि। तथाच श्रुतिः, 'सर्वेभ्यो दुःखेभ्यः सन्तारयतीति तारणात्तारः सर्वदेववेदयोनिः सर्ववाच्यवस्तु प्रणवात्मकम्'। (अथर्व शिखोप.) त्वं स्फुरदात्मवीणानादारता स्फुरन्ती द्योतमाना या आत्मवीणा ततो यो नादः ध्वनिः नादबिन्दुर्वा तत्र आरता जननपरा सती विदे ज्ञानाय नन्दनदासहृत्सु नन्दनाः पुत्राश्च ये दासाश्च तेषां हृत्सु एहि आविर्भव। तारदानादित्युच्चशब्द-जननसामर्थ्यात् सर्ववाद्यमयो घण्टेति व्यज्यते। नवीनोऽयं बन्धः ॥१८॥

संकल्पकाले साधकस्य हृदये सारस्वती दीप्तिराविर्भवति। ततश्च पताका-रोपणादिना पूजा, मन्दिरसज्जा च क्रियते इति पताकाबन्धं व्याचष्टे—

राजते नवभा काचित् सनादार्णवखेलनी।
नीलखे वर्णदा-ना-स-चित्का भावनतेऽजरा ॥१९॥

(गतप्रत्यागतम् पताकाबन्धश्च) **चित्र संख्या–६**

चित्रसंख्या २ मुरजबन्धः

व र दा म हृ दा र भ
पा र दा न म दा र ना
ता र दा म दा ग भ
स र दा म हृ हृ ग मो

[ वरदा महदारम्भपारदेत्यादि श्लोकः—१६ ]

पृष्ठम्—२




[ भातु कापि ललिताकृतिरित्यादि श्लोकः—१७ ]
पृष्ठम्—९




[ सुहृत् सदानन्दनेत्यादि श्लोकः—१८ ]

पृष्ठम्—१०

काचित् नवभा ज्योतिषां ज्योतीरूपा प्रत्यग्रा दीप्तिः सारस्वतीत्यर्थः राजते। सनादार्णवखेलनी नादेन सह वर्त्तमानः अर्णवः सनादार्णवः नादसिन्धुरित्यर्थः। तत्र क्रीडारता; नीलखे नीलाकाशे वर्णदत्र अक्षरप्रकाशकारिणी मातृकावर्णरूपेणाविर्भवन्ती अना अनुपमा, नकारस्योपमार्थः; सचिता चिन्मयी अथवा अनासा 'सयो'रभेदात् अनाया अविनाशिनी चित् चितिशक्तिर्यस्याः सा समासान्तकप्रत्ययात्, अनासचित्का नित्यचिन्मयीत्यर्थः। भाव्नते भावेन भक्त्या नते आवर्जिते प्रपन्नभक्तविषये अजरा अनपायिनी चिरस्थिरेत्यर्थः। नीलखे खेलनी नवभा काचिद् राजते इत्यनेन भारतराष्ट्रस्य स्वतन्त्रतासूचिकायाः पताकाया ध्वनिः ॥१९॥

इदानीं कविः साधकमुद्बोधयति—संकल्पदार्ढ्याय—

राधानुरागिन्नुपसंसराशु तामाहितामन्तरभूमकाया।
या कामभूरन्तमता हि माता सुरासत्संपन्नु गिरानुधारा ॥२०॥

(अनुलोमप्रतिलोमगतम्)

हे राधानुरागिन्! राध सिद्धौ, (राध्धातोरल्) राधः सिद्धिः तदनुरागिन् हे सिद्धिप्रिय साधक! आशु शीघ्रम् आहिताम् मनसि आविर्भूतां तां वाग्देवीम् उपसंसर समीपे प्राप्नुहि, यथा चित्तविक्षेपेण सा मनसः सद्यो न विलीना भवेत् तथा दृढं ध्यायेत्यर्थः। या अन्तरभूमकाया अन्तरम् अन्तरात्मा तद्रूपो भूमा विराट् स एव कायः स्वभावो यस्याः सा। 'यो वै भूमा तदमृतमिति श्रुतेः' (छान्दोग्य. ७।२४।१) अमृताकारेत्यर्थः। अपिच या कामभूः सर्वेषां कामानाम् उत्पत्तिस्थानम्—'आत्मैवेदमग्र आसीदेक एव सोऽकामयत जाया मे स्यादथ प्रजायेयाथ वित्तं मे स्यादथ कर्म कुर्वीयेत्येतावान् वै काम" इत्यादि (बृह. उप. १।४।१७)। श्रुतिभ्यो ब्रह्मण एव कामोत्पत्तिदर्शनात्। अन्तमता माता हि सा अन्ते अवसाने प्रलये मता अभिमता 'अङ्के सुप्तमिवात्मजं वहति सा कल्पावसन्नं जगदिति ब्रह्मसूत्रशक्तिभाष्योक्तेः, तस्यास्त्रिविधं स्वरूपं वितर्कमुखेन विवृणोति—सुरासत्सम्पत् शोभनरस-सम्बन्धिनी सम्पत् 'रसो वै सः' इति (तै. उप. २।७) श्रुतेः आनन्दमयीत्यर्थः, नु प्रश्ने, गिरा वाक् 'यद् वै वाङ्नाभविष्यन्न धर्मो नाधर्मो व्यज्ञापयिष्यन्न सत्यं नानृतम्....वागेवैतत्सर्वं विज्ञापयति वाचमुपास्स्वे' ति श्रुतेः (छा. उप. ७।२।१) शब्दब्रह्मरूपिणीत्यर्थः। नु धारा! धारा सन्ततिः सृष्टिप्रवाहरूपा दृश्यमानविश्वप्रपञ्चस्वरूपा 'स वा अयमात्मा ब्रह्म विज्ञानमयो मनोमयः प्राणमयश्चक्षुर्मयः श्रोत्रमयः पृथिवीमय आपोमयो वाङ्मयः......सर्वमय इति श्रुतेः; (बृह. ४।४।५) अथवा धारा 'क्षुरस्य

धारा निशिता दुरत्यया' इति (कठ. १।१५) श्रुतेः क्षुरस्य धारावद् दुर्गमा। एतेन साधकेन सावधानेन वागुपास्येति सूचितम्। अत्र 'क्षुप-संसरामु' इति प्रतिलोमगत्या 'सुरासमंपक्षु' इति शब्दयोरभेदेन कल्पनं नियमसिद्धम् ॥२०॥

साधकस्तावत् सारस्वताराधनारम्भे घटस्थापना-सामान्यार्घ्यं कल्पयति—

सुधासुधाम त्वा मत्वा विबुधा दधते हिते।।
ते हि तेर्घ्यं स्फुरन्मौली त्वामतुल्यां भजेमहि ॥२१॥

(घटबन्धः) चित्र संख्या–७

हिते! कल्याणकारिणि! ते प्रसिद्धाः विबुधाः देवाः त्वा त्वां सुधासुधाम ज्ञान-सुधायाः शोभनगृहं मत्वा 'सर्वेषां वेदानां वागेकायनम्' इति श्रुतेः (बृह. ४।५।१२) ते तव स्फुरन्मौली उज्ज्वलशिरोदेशे अर्घ्यं दधते। अतः अतुल्यां तुलनारहितां देवानामपि पूज्यत्वेनेति भावः। त्वां भजेमहि। सुधा-धारत्वेन घटरूपवस्तु व्यज्यते। अर्घ्यपदेन प्रथमकर्तव्य–सामान्यार्घ्यस्मरणम्।

इदानीमासनशुद्धिं स्मरन्नाह—

सुकल्पने हृद्भवने सवासने
कुशासने ग्रन्थिघनेऽष्टबन्धने।
सुस्वागतं हृद्यतनो! सदास्तु ते
कुतोऽप्यनुग्रग्नि! सुदिप्ततो हि नः ॥२२॥

(आसनबन्धः) चित्र संख्या–८

सुकल्पने–शोभना कल्पना भावना यत्र तादृशे, सवासने वासना जन्मान्तरीय-संस्कारः, तेन सह विद्यमाने अतएव ग्रन्थिघने 'छिद्यते हृदयग्रन्थि' रिति (मुण्ड. २।२।८१) वासनाया ग्रन्थिरूपता शास्त्रसिद्धा, ग्रन्थिभिः घने निबिडे, अष्टबन्धने अष्टं व्याप्तं बन्धनं मायापाशो यत्र, कुशासने कुत्सितं शासनं शिक्षा यत्र एवम्भूते हृद्भवने गृहरूपे हृदये हे हृद्यतनो! रुचिरकाये! अनुग्रग्नि! स्निग्धशोभे! अथवा उग्रः शिवः तद्भिन्नः अनुग्रः विधि विष्णुर्वा तस्य श्रीः तत्सम्बुद्धौ, नः अस्माकं कुतोऽपि अचिन्तनीयात् सुदिप्ततः सौभाग्यात् हि तत्र सुस्वागतं स्वागतम् अस्तु। अथच हृद्रूपे भवनेऽस्मिन् कुशासने कुशमयासने तव स्वागतमस्तु। भवनञ्च कीदृशम्? सुकल्पने शोभन-रचनायुक्ते सवासने वासनं वस्त्रम्, तेन युक्ते वस्त्रसज्जिते



[ सुधासुधाम त्वा मत्वेत्यादि श्लोकः—२१ ]
पृष्ठम्—१२

ग्रन्थिपने माल्याग्रिगुम्फनेन निविडे पूजा-भवने स्नेहमयि ! त्वदागमो भवत्वित्यर्थः। ग्रन्थिपनाष्टबन्धनसुकल्पनादिविशेषितकुशासनपदेनासनबन्धोऽपि गुणीभूतव्यञ्जनया लभ्यते ॥२२॥

घटस्थापने वृक्षपल्लवस्यावश्यकत्वाद् वृक्षबन्धमिदानीं तनुते—

संसारवृक्षक्षयरक्षणैकक्षमे दयस्व क्षणमीक्षयास्मिन् ।
क्षपान्धकारक्षपिताक्षदाक्ष्ये क्षरत्सुधांशुक्षणदासि दासे ॥२३॥

(वृक्षबन्धः) **चित्र संख्या–९**

संसारवृक्षस्य क्षयरक्षणे नाशे पालने च तत्र एका मुख्या क्षमा शक्तिर्यस्याः सा तत्सम्बोधने। अस्मिन् दासे मादृशे क्षणम् ईक्षया दृष्टिदानेन दयस्व। कीदृशोऽयं दासः? क्षपान्धकारक्षपिताक्षदाक्ष्ये—क्षपाया अविद्याया योऽन्धकारः ज्ञानदृष्टिरोधिनी शक्तिः तेन क्षपितं नाशितम् अक्षदाक्ष्यं नयनपाटवं यस्य स तस्मिन्। क्षरन् सुधांशुर्यो योऽंशुः करः यत्र तादृशी क्षणदा रात्रिः राकास्वरूपा अथच उत्सवदात्री त्वमसि। मादृशदासस्य ज्ञानदृष्टिप्रकाशनं त्वदेकाधीनमित्यर्थः। वृत्यनुप्रासः। संसारस्य वृक्षरूपताकथनं 'समानं वृक्षं परिषस्वजाते' इति मुण्डकश्रुतिप्रसिद्धम्। वृक्षपदेन वृक्षबन्धो व्यङ्ग्यः ॥२३॥

वृक्षस्य कोमलशाखाप्रमादार्थेव घटस्थापनं भवति, शाखा लता च समानार्थिका, तदर्थं लताबन्धं तनुते—

कापि कान्ता शुभा शुद्धा सुधासुभ्राड् ललल्लता ।
जीयाज्जीवासुदा सुष्ठु मुक्तिमुक्तावहावनौ ॥२४॥

(लताबन्धः) **चित्र संख्या–१०**

कापि अपूर्वा कान्ता कमनीया शुभा मङ्गलमयी शुद्धा पवित्रा श्वेता च सुधासुभ्राड् सुधावत् शोभमाना ललल्लता लीलाविभ्रममयी लता ललनाकृति र्वाग्देवीत्यर्थः। जीयात् जययुक्ता भवतु। सा जीवासुदा जीवानां प्राणप्रदा 'येन जातानि जीवन्तीति (तैत्ति० ३।१) श्रुतेः। अवनौ पृथिव्यां सुष्ठु यथा स्यात्तथा मुक्तिरूपां मुक्तामावहतीति मुक्तिमुक्तावहा। लतापि जीवप्राणदायिनी ओषधिरूपत्वात् मुक्तां रास्नानामलतां पत्रात्मिकां वहति। 'रास्ना तु त्रिविधा प्रोक्ता मूलं पत्रं तृणं तथा' इति राजनिर्घण्टप्रमाणात्। लतेतिपदव्यङ्ग्यः लताबन्धः। समासोक्तिरलंकारः ॥२४॥

घटस्थापनानन्तरं वाग्देवताया ध्यानमाकलयन् साकारत्वं निराकाराया अपि न विरुध्यते 'द्वे वाव ब्रह्मणो रूपे मूर्तंचैवामूर्तं च' (बृह० २।३।१) इति साकारत्वं निर्वर्तित।

वर्णध्वनिरस-भावालङ्कार-रीतिगुण-प्रतीतिश्चेत्।
साधारतानुरोधात् साकारा सारदा जयति ॥२५॥

वर्णो मात्रकान्तिः, ध्वनिः कण्ठस्वरः, रसः रागः, भावः अभिप्रायः, अलंकारः भूषणं कटककुण्डलादि, रीतिः व्यवहारः गतिर्वा, गुणः विनयादिः, तेषां प्रतीतिर्यदि प्रामाणिकी स्यात् तर्हि तेषां वर्णादीनां साधारतानुरोधात् आश्रयमपेक्ष्य साकारा सारदा मन्तव्या। न खलु ते वर्णादयो गुणान्ताश्च पदार्था निराश्रया भवितुमर्हन्ति, अतः कश्चिदाधारोऽवश्यमभ्युपेयः, ततश्च साकारा सारदा जयति। अथच वर्णाः ककारादयः, ध्वनिः व्यञ्जनावृत्त्युपस्थाप्यः अर्थविशेषः, रसः शृङ्गारादिः, भावः सात्त्विकादिः, अलंकारः शब्दार्थयोरस्थिरः शोभातिशायी धर्मः, रीतिः सङ्घटना, गुणः प्रसादादिः तेषां प्रतीतिस्तु प्रामाणिकतया सर्वैरङ्गीक्रियते। अतएव सारदायाः साकारत्वं सिध्यति काव्यलिङ्गालङ्कारः ॥२५॥

वाग्देवता ब्रह्मरूपिणीति श्रुत्यादिशास्त्रसिद्धं स्वयमपि कविना तथा वर्णितञ्च। अतएव सा विभुः सर्वव्यापिका, तस्याः परिच्छिन्नमूर्तित्वं कथं सम्भवेत्? विभुत्वमेव तत्प्रतिबन्धकमिति विवृणोति—

तनुमती ननु सा तनयान् प्रति
स्फुरदशेषकृपावशतः स्वतः।
अपलपत्यपि वैभवमिच्छया
सुतहिताय निजं जननीजनः ॥२६॥

सा देवी तनयान् प्रति स्फुरदशेषकृपावशतः स्वतः तनुमती ननु भवतीति शेषः। तथाच श्रुतिः, 'यमेवैष वृणुते तेन लभ्यस्तस्यैष आत्मा विवृणुते तनूं स्वाम्' (मुण्डक० ३।२।५) न स्वं विवृणुतेऽपितु स्वां तनूं प्रकाशयतीति ब्रह्मणः स्वेच्छया तनुप्रकाशो ज्ञायते। तत्र हेतुं दर्शयति कविः—जननीजनः माता सुतहिताय निजं वैभवम् अपि इच्छया अपलपति वैभवं विभुत्वं धनादिविभवञ्च निह्नुते गोपयति। यथा जननी समृद्धिमती सत्यपि पुत्राणां धनजन्यविकारनिवृत्तये स्वीयं विभवं गोपयति तद्वत्॥ जननीकार्य-सामान्येन वाग्देवीकार्यसमर्थनादर्थान्तरन्यासः ॥२६॥

चित्र संख्या—९ वृक्षबन्धः

[ संसारवृक्षाश्रयेत्यादि श्लोकः—२३ ]
पृष्ठम्—१३

१०



नाबन्धः। चित्रसं

[ कापि कान्ता शुभेत्यादि श्लोकः—२४ ]

पृष्ठम्—१३

युक्त्यन्तरेणापि देव्या विग्रहवत्त्वं प्रतिपादयन्नाह—

कश्चिद् विपश्चिद् यदि संशयानः
स्याद्देवदेहादि-विवादमोदी ।
आलम्ब्यते त्वद्विषये तु मौनं
वाग्विग्रहं स्वीकुरुतेऽन्यथासौ ॥२७॥

देवदेहविषये, आदिपदात् देवता-चैतन्यविषये यदि कस्यचिद् विदुषो विप्रतिपत्तिः स्यात्, वाग्देवतापक्षे तु तस्य सम्मतिलक्षण-मौनावलम्बनं बिना गत्यन्तरं नास्ति, अन्यथा मौनभङ्गे वाग्विग्रह-स्वीकारो भवेदेव । विग्रहो युद्धं मूर्तिश्च । इति शब्दश्लेषनिबन्धनो विग्रहभेदेऽप्यभेदाध्यवसायादतिशयोक्त्यलंकारः ॥२७॥

इदानीं साकारत्वे स्थापिते भूतशुद्धिमातृकान्यासानन्तरं वाग्देवता-रूपध्यानं मानसोपचार-पूजनञ्च चिकीर्षन्नाह—

सितशतदलवासा या सहस्रारभासा-
मुपरि विशदहासा सन्ततध्वान्तनाशा ।
शशिशकलविकाशादभ्रशुभ्रीकृताशा
परमरसविलासा भातु सा देवभाषा ॥२८॥

श्वेतपद्मासना सहस्रदलकमलोद्भासिहास्या नियततमोहरा ललाटे शशिकलाधारणात् पर्याप्तरूपेण दिशां शुभ्रताविधायिनी परमानन्दमयी सा देववाणी साधकहृदये भातु । सहस्रदलकमलक्षरित-रसादिर्मानसोपचार-सामग्री । हृत्पद्ममासनं दद्यात् सहस्रारच्युतामृतैः पाद्यं चरणयोर्दद्यादित्यादि तन्त्रवचनस्मरणात् । अन्त्यानुप्रासनामकः शब्दालंकारः ॥२८॥

भूतशुद्धिक्रमेण मानसोपचार-पूजायां षट्चक्रभेदं कल्पयन्नाह—

आभासमानवनतामरसं गताया
आभा समानवनतामरसंगता या।
सा रातु रायमुदितासितषट्पदार्था
सारातुराय मुदितासितषट्पदार्था ॥२९॥

(पादद्वययमकः)

आभासमानवनतामरसं गतायाः या स-मानवनतामरसंगता आभा, सितवद्पदार्था आसितषद्पदार्था मुदिता सारा (च) सा उदिता आतुराय रायं रातु इत्यन्वयः। आभासमानम् उज्ज्वलीभूतं वनं जलं यतः, तादृशं तामरसं पद्मं गतायाः तत्र स्थितायाः इत्यर्थः। वाग्देवतायाः समानवनतामरसंगता समानवाः नता ये अमराः तैः सह संगता मिलिता या आभा सारस्वती द्युतिरित्यर्थः। सा आभा तद्वती चाभेदेनोपचरिता। सितवद्पदार्था सिता नाशिताः षट्पदार्थाः कामादिषड्रिपवो यया, तथा आसिताः प्रापिताः षट्पदानां षट्स्थानावस्थितानां षट्चक्राणां मातृकावर्णात्मकत्वात् षट्चक्रदलगतवर्णव्याप्तितया तेषाम् अर्थाः कार्याणि यया, अथवा आसिताः साधिताः षट्पदानां भ्रमराणाम् अर्थः कमलोपरि सन्निवेशः कलनादजननञ्च यया सा। मुदिता सानन्दा, सारा श्रेष्ठा सा उदिता आविर्भूता सती आतुराय भवरोगेण आर्त्ताय रायं धनं परमधनं मुक्तिरूपं, शब्दं वा तत्त्वज्ञानजननं वेदरूपं रातु ददातु। आर्त्तो जिज्ञासुरर्थार्थीति गीतावचनादार्त्त-स्याप्युपासनाधिकार उक्तः ॥२९॥

देवतामूर्तेः परिकरवीणादिकमुपदीकृत्य तदनन्तरं पूजोपकरणसमर्पणमिति क्रमनियममनुसरन् वीणाबन्धमादौ प्रदर्शयति—

> या देवशक्तिरपि सेवकभक्तियोनिर्
> निर्वेदहेतुरपि वेदवचोऽभिधेया।
> यायावरस्य वरदापि जडार्तिहानिर्
> निर्माणकृद् विततविश्वभुवोऽप्यकामा ॥३०॥

(वीणाबन्धः) चित्र संख्या—११

या वाक् देवशक्तिः देवानां शक्तिरूपा "अहं रुद्रेभिर्वसुभिश्चराम्यह'मि त्यादि देवीसूक्त-मन्त्रेण वाचस्तथा कीर्तनात्। सेवकभक्तियोनिः सेवकानाम् उपासकानां भक्तिरेव योनिः उत्पत्तिस्थानं यस्याः सा–'उपासकानां सिद्धयर्थं ब्रह्मणो रूपकल्पनेति तन्त्रोक्तेः। अपिकारेण विरोधः, भगवन्महिम्ना च तत्परिहारः। निर्वेदहेतुरपि निर्वेदे वेदाभावे अथच वैराग्ये हेतुरपि वेदवचोऽभिधेया, वेदवचसा ज्ञेया ऋग्वेदीयदेवीसूक्तादिनेत्यर्थः, इति विरोधतत्परिहारौ। यायावरस्य भ्रमणशीलस्य वरदा अपि जडार्तिहानिः जडस्य गमनशक्तिरहितस्य आर्त्तिहानिर्यतः इति विरोधः। परिहारश्च यायावर-सम्प्रदायस्य वरदायिनी मूर्खस्य दुःखविनाशिनी च। विततविश्वभुवः प्रपञ्चरूपस्य जगतो निर्मात्री अपि अकामा कामहीना इति विरोधः, परिहारश्च लीलाकैवल्याज्जगन्निर्मातृता ॥ नवोऽयं बन्धः ३० ॥

चित्र संख्या—११

वीणाबन्धः



[ या देवशक्तिरपि सेवकेत्यादि श्लोकः—३०
पृष्ठम्—२६

निजकरकमलोद्यल्लेखनीपुस्तकश्रीरिति ध्यान-वचनात् पुस्तकस्यापि वाग्देवतामूर्तौ निवेशदर्शनात् पुस्तकबन्धं तनुते—

सा जयत्वचिदाकारा राकाशशिशतौजसा ।
सारदा धृतसंसारा रासात्मा पूर्णचिद्रसा ॥३१॥

(पुस्तकबन्धः) चित्र संख्या—१२

सा सारदा जयति । कीदृशी सा ? राकाशशिशतौजसा राकाशशिनः पूर्णचन्द्राः तेषां शतं तस्य ओजः तेजः तेन उपलक्षिता । अचिदाकारा चिद्भिन्ना माया वा प्रकृतिरिति वा, सैव आकारः शरीरं यस्याः सा, अतएव धृतसंसारा मायास्वरूपेण संसारस्थितिकारणम् । अपिच रासात्मा रासः शब्दः आत्मा स्वरूपं यस्याः सा शब्दमयीत्यर्थः । पूर्णचिद्रसा पूर्णो चिद्रसो यत्र सा, चित् ज्ञानं रस आनन्दश्च यत्र भूम्ना विद्येते । 'सत्यं ज्ञानमनन्तं ब्रह्म । अन्योऽन्तर आत्मानन्दमयः । तेनैष पूर्णः' ॥ इत्यादि (तैत्ति० २।१-५) श्रुतेः । पुस्तकस्य रसज्ञानजनकशब्दसमूहात्मकत्वात् पुस्तकबन्धो व्यज्यते ॥३१॥

वाग्देव्या वाहनं हंस इति प्रसिद्धम् । ब्रह्मा हंसवाहनः, तदीयशक्तिरूपत्वात्, सरस्वत्या अपि हंसवाहनत्वं युक्तम् । अतो हंसबन्धः प्रदर्श्यते—

हंसो मानससङ्गी जीवनरङ्गी न चोर्मिरुग्भागी ।
गीर्वाहनतनुयोगी यो गीतः सुमहिमा सोऽहम् ॥३२॥

(हंसबन्धः) चित्र संख्या—१३

हंसो जीवात्मा, पक्षिविशेषश्च । मानसं मनः, सरोविशेषश्च तत्सङ्गी । जीवनं जीवनकालः, जलञ्च, तत्र रङ्गी क्रीडारतः । ऊर्मिः शोकमोहजरामृत्युक्षुत्पिपासारूपा ('षडूर्मयः'), अथच तरङ्गः । गीः वाग्देवी, मनुष्याणां वाक्शक्तिश्च । गीर्वाहनतनुयोगी वाक्शक्तिवाहनरूपशरीरे योगो वर्तते, अथच हंसरूपवाहने देव्याः शरीरयोगोऽस्ति । यो हंसः जीवः, सोऽहमिति सुमहिमा सुबृहत् परब्रह्मरूपः गीतः । जीवात्मपरमात्मनोर्भेदो नास्तीति वेदान्त-सिद्धान्तः । यद्यपि हंसो ब्रह्मरूपः, तथापि 'एको हंसो भुवनस्यास्य मध्ये' इत्यादि (श्वेता० ६।१५) मन्त्रवर्णात् तस्य ब्रह्मस्वरूपत्वात् । अतः सारस्वतीयं स्तुतिः । अत्र श्लिष्टरूपकालंकारः । सविशेषणो हंसशब्द एव हंसबन्धं व्यञ्जयति ॥३२

मयूरस्य महाराष्ट्रदेशे सरस्वतीवाहनत्वं प्रसिद्धमिति मयूरबन्धः प्रयुज्यते—

> का केशवतनुशोभाननभाहृतसन्तताहिसंक्षोभा ।
> भासुरचन्द्रकलास्या यद्वीणाक्वणितवशकेका ॥३३॥

(मयूरबन्धः) चित्र संख्या—१४

केशवतनुशोभा का ? केशवस्य विष्णोः तनौ का शोभा–वाग्देवी। आननभाहृतसन्तताहिसंक्षोभा आननभवा मुखदीप्त्या भाघातोः क्विपि भेतिरूपम्, कुतः सन्ततः अहेः सूर्यस्य संक्षोभः नियत-पराभवो यया सा। भासुरचन्द्रकलास्या–भासुरा दीप्तिमती चन्द्रकला यत्र तादृशम् आस्यं यस्याः सा, तरुणशकलमिन्दोर्बिभ्रतीति ध्यानोक्तेः। यद्वीणाक्वणितवशकेका यस्या वीणाध्वनिवशा केका मयूररुतं तत्सदृशषड्जस्वरो वा यस्याःतादृशी सा देवी। केकातो वीणायाः क्वणितं मधुरतरमिति भावः। मयूरपिच्छेन कृष्णशिरोभूवा, मयूरमुखात् सर्पक्षोभः, भासुरचन्द्रकाः बर्हिनेत्राणि लास्यानि (नृत्यानि) केका चेति शब्दसमूहसामर्थ्यात् मयूरवस्तु व्यज्यते। नवीनोऽयं मयूरबन्धः ॥३३॥

'मुद्रामक्षगुणं सुधाढ्यकलसं विद्यां च हस्ताम्बुजं बिभ्राणां विशदप्रभा'मित्यादिमन्त्रेण कुम्भस्यापि देव्यङ्गे स्थितिरुपलभ्यते इति कुम्भबन्धं तनुते—

> न्यस्तस्तन्यरसासाररमणीरमणीयता ।
> तायताञ्जगतो मात्रा मात्रातो या मतायता ॥३४॥

(कुम्भबन्धः) चित्र संख्या—१५

न्यस्तः निहितः स्तन्यरसस्य स्तनदुग्धस्य आसारः धारापातः यया तनयमुखे इति शेषः, तादृशी या रमणी तस्या रमणीयता चारुता, या मात्रातः परिमाणतः आयता सर्वाधिका मता, रमणीसामान्यापेक्षया जगन्मातुस्तादृशी चारुता महत्तरा भवत्येव। तादृशी चारुता जगतो मात्रा विश्वजनन्या वाग्देव्या तायताम् प्रकटीक्रियताम्। आपीनतुङ्गस्तनीमिति ध्यानवचनाद् वाग्देवतायास्तादृशं मातृत्वं सूचितम्। स्तन्यरसपूर्णकुचसादृश्यात् कुम्भस्य कुम्भबन्धो नवोऽयं व्यज्यते ॥३४॥

चित्र संख्या—१२ पुस्तकबन्धः

जयत्यचिदाका काशशिशुतीज
रा
सा
रदाधृतसमा क्षात्मापूर्णचिद्

[ सा जयत्यचिदाकारेत्यादि श्लोकः—३१ ]

पृष्ठम्—१७



कुम्भबन्धः ॥ चित्रसंख्या-१५

[ न्यस्तस्तन्यरत्नासारैरित्यादि श्लोकः—३४ ]

पृष्ठम्—१८

इदानीं पूर्वोक्तमक्षगुणमर्पयितुमक्षमालाबन्धं प्रकटयन्नाह—

याक्षमालिकराकासा साकारा कलिमाक्षया ।
याक्षमालिकराकासा साकाराकलिमाक्षया ॥३५॥

(पादचतुष्टय-यमकः, गतप्रत्यागतञ्च)

(अक्षमालाबन्धः) चित्र संख्या—१६

या क्षमा अलिकराका सा साकारा कलिमाक्षया, याक्षमालिकराकासा, सा काराकलिमा अक्षया इत्यन्वयः। या क्षमा शान्तिस्वरूपा, धृतिमूर्त्तिरित्यर्थः। अलिकराका अलिके ललाटे कलामात्रस्य चन्द्रस्य सत्त्वेऽपि देव्यङ्गप्रभाभिः सा कला वर्धिता सती प्रतीता राका पूर्णेन्दुतिथिर्यस्याः सा, एतेन प्रभामूर्त्तिर्बोध्यते। सा गौरीति शब्दरत्नावलीप्रमाणात्। साकारा प्रत्यक्षरूपा धरामूर्त्तिः। कलिमाक्षया कलिः कलहः मा ज्ञानं तयोः क्षयौ यतः सा, कलेः क्षयो नाशः, तुष्टिमूर्त्तिमुपासितुनं कलहप्रवृत्तिः। मायाः ज्ञानस्य क्षयो निवासः यत्र सा; एतेन मेधामूर्त्तिः सूच्यते। याक्षमालिकराकासा—या चला यातीति याधातोर्ड-प्रत्यये कृते स्त्रियाम्। अक्षमालिकराकासा—अक्षमालायुक्तकरेण आचकास्ति विभातीति आङ्पूर्वककासधातोः अच्। पाशाक्षमालिकाम्भोजसृणिभिरित्यादि लक्ष्मीध्यानवचनेऽक्षमालाधरा सा चेति चला चेति लक्ष्मीमूर्त्तिः सूच्यते। सरस्वत्या अष्टमूर्त्तयो यथा—'लक्ष्मीर्मेधा धरा पुष्टिर्गौरी तुष्टिः प्रभा धृतिरि'ति। सा काराकलिमा कारः क्रिया निश्चयो वा तम् आकलयितुं जनयितुं शीलमस्या इति काराकलिनी सा चासौ मा माता चेति सर्वोपकारिणी मातेति पुष्टिमूर्त्तिः। अक्षया अविनाशिनी नित्या च। अक्षमालिकेति शब्दग्रहणात् अनुलोमविलोमगत्या चतुरावृत्त्या चाभिनवोऽयम् अक्षमालाबन्धो व्यज्यते। सरस्वत्या अष्टमूर्त्तिस्मरणात् अक्षमालाया अष्टसंख्यकबीज-घटितत्वमपि सूच्यते ॥३५॥

अतःपरं कङ्कणं करभूषणं निपातुमाह—

मायासारा ज्ञानालोका।
सामाराका भायादेका ॥३६॥

(कङ्कणबन्धः) चित्र संख्या—१७

माया अचित् असारः अप्रधानांशो यस्याः सा, ज्ञानम् आलोकः द्योतः यस्याः सा। आलोकपार्श्वस्था छायेव ज्ञानं माया च यस्याः स्वरूपम्। छायातपौ ब्रह्मविदो वदन्तीति श्रुतेः (कठ० १ अः ३ वः १) अतएव सामाराकां अमावास्यया

सहिता राका पूर्णेन्दुतिथिरिवेति प्रतीयमानोत्प्रेक्षा नित्यमिलितचिदचिद्रूपा, एका अद्वितीया ब्रह्मरूपिणो भावात् प्रकाशिता भवतु। शाक्तदर्शनसिद्धान्तानुसारेणेदम्। देवीसूक्ते वाचो देव्या ब्रह्मरूपताकीर्त्तनात्। कङ्कणबन्धः किल वृत्ताकारकरभूषणरूपः सर्वगुरुवर्णघटितच्छन्दोमयः, यस्मात् कस्मादपि वर्णतो ग्रहणे बन्धस्य न कापि हानिः। कन्याच्छन्दः ॥३६॥

विपरीतवर्णक्रमेण तमेव श्लोकं रूपान्तरेण परिणमयन्नाह—

कादेया भा का रामा सा।
कालीना ज्ञा रासायामा ॥३७॥

का अदेया? नास्ति देयं यस्याः देयवस्तुषु सर्वोत्तमा, विद्यादानस्य श्रेष्ठत्वात्। का भा दीप्तिः? जगति ग्रहनक्षत्रादीनां दीप्तिर्बहिःप्रकाशिका, विद्या त्वन्तःप्रकाशिनीति तदुक्तर्थः। सा रामा मनोज्ञा, कालेन ऊना हीना मृत्युरहिता नित्येत्यर्थः। ज्ञा ज्ञानं तद्रूपा। रासः शब्द-सम्बन्धी आयामः विस्तरो यस्याः सा। शब्दमयी देवीत्यर्थः। शब्दद्वारैव ज्ञानविस्तारो भवतीति भावः ॥३७॥

अनुलोमगत्या द्वितीयवर्णादारभ्य तमेव श्लोकमन्यथा व्याचष्टे—

या साराज्ञानालोका सा।
मा राकाभा यादेकामा ॥३८॥

या सारा श्रेष्ठा, अज्ञानालोका अज्ञः मूर्खैः अनालोका तेषामप्रत्यक्षा। सा मा लक्ष्मीरूपापि। तथा राकाभा राकावत् पूर्णिमावत् आभातीति, 'मह इति तद्ब्रह्म मह इति चन्द्रमाः, 'चन्द्रमसा वाव सर्वाणि ज्योतींषि महीयन्ते' मिति श्रुतिः, अयादेकामा अयात्सु अचलत्सु वस्तुषु एका मुख्या। अमा अतुला। लक्ष्मीस्तु चला सरस्वती लक्ष्मीरूपापि न चलस्वरूपेत्यतुलत्वकीर्त्तनम्। 'लक्ष्मीर्मेधा धरापुष्टि'रित्याष्टमूर्त्तयः सरस्वत्याः प्रागुक्ता एव ॥३८॥

विलोमगत्या द्वितीयवर्णादारभ्य श्लोकममुं रूपान्तरेण प्रदर्शयति—

देयाभा कारामासाका।
लीना ज्ञारा सायामा का ॥३९॥

·देया आभा यया सा, अन्यथा विश्वप्रकाशो न सम्भवति, वाग्देव्या आभादानादेव चन्द्रसूर्यादीनां ज्योतिः प्रकाशते—'तमेव भान्तमनुभाति सर्वम्' इति (मुण्डक २।२।१०) श्रुतेः। कारामासाका—कारामासा अका इति पदच्छेदः।

चित्र संख्या—१६ अक्षमालाबन्धः

या क्ष मा लि क रा का सा

[ याक्षमालिकराकासेत्यादि श्लोकः—३५ ]

पृष्ठम्—१९

कङ्कणबन्धः चित्र संख्या—१७



[ मायासारा ज्ञानेत्यादि श्लोकः—३६ ]
पृष्ठम्—१९

कं जलं तत्र आराम उपवनम्, तच्च कमलोपवनम् तत्र आसः अधिष्ठानं यस्याः सा। अका नास्ति कं शरीरं यस्याः सा अशरीरा। निर्गुणब्रह्मपरत्वे निराकारत्वं सिध्यति। सगुणत्वे च साकारत्वं नासङ्गतम्। ऊनाशारा–शात् इन्द्रात् ऊना हीना वाय्वग्निहुताशनादयो देवाः तेषु आशाम् आदेशं राति ददाति या सा, उमारूपेणाविर्भूय इन्द्रावरेषु देवेषु तृणदहनाद्यादेशं ददाविति केनोपनिषद्वार्त्ता। 'मेधासि देवि विदिताखिलशास्त्रसारे'त्यादिसप्तशतीमन्त्रेण वाग्देवताया उमास्वरूपाभेदप्रतिपादनात्। सामामा सर्वव्यापिनी। का इति प्रश्ने ॥३९॥

अनुलोमगत्या तृतीयवर्णादारभ्य श्लोकान्तरं दर्शयन्नाह—

सारात्राना लोका सामा।
राकाभायादेकामाया ॥४०॥

साराज्ञानालोका—सारे श्रेष्ठवस्तुनि (विषये सप्तमी) अज्ञानं येषां ते साराज्ञानाः तैः अलोका अदर्शनीया, सरस्वत्याः सार-रूपत्वात्। सा अमा तन्नाम्नी महाकला आधारशक्तिरूपा। राकाभायादेकामाया; राकाभा आय आदेका अमाया इति पदच्छेदः। सैव राकाभा नदीविशेषवद् भाति, सा त्वम् आय आगच्छ भ्वादिगणीयस्य इणधातोर्लोटि। आत् विष्णोः एका अभिन्ना। शक्ति-शक्तिमतोरभेदात्। अमाया मायानधीनेत्यर्थः। अथवा माया प्रकृतिः ("मायां तु प्रकृतिं विद्यात्" इति श्वेता० ४।१०) न केवला प्रकृति रिति भावः। प्रकृतेर्ज्ञत्वात् ॥४०॥

विलोमगत्या तृतीयवर्णादारभ्य श्लोकान्तरं सम्पादयन्नाह—

या-भाकारा-मासाकालो।
ना शा-रासा यामाकादे ॥४१॥

या भाकारा आमासा अकालो इति पदच्छेदेन याभाकारामासाकालो। भानि ग्रहाः तद्वत् आकारो यस्याः सा ज्योतिर्मयीत्यर्थः। आमः रोगः तमस्यति क्षिपति दूरीकरोतीत्यर्थः। सूर्यादिग्रहाणां तथा रोगहरत्वं यथा सरस्वत्याः, आयुर्वेदविद्यापि तदधीना। नास्ति कालः कृष्णवर्णः यत्र सा अकाला निरञ्जनेत्यर्थः। उ इत्यव्ययमात्रं सम्बोधने। भोः! त्वं ना पुरुषोऽसि। 'त्वं स्त्री त्वं पुमानसी'ति (श्वेता० ४।३) श्रुतेः। शारासायामाकादे–शारासाया मा अक

आदे इति च्छेदः। हे आदे!' आदिभूते! ज्ञा ज्ञानम् अर्थज्ञानं रासः शब्दः तयोः आयः आविर्भावो यतः सा, ज्ञारासाया शब्दार्थज्ञाननिदानभूतेत्यर्थः। सा त्वं मा अक गच्छ। इहैव तिष्ठेति प्रार्थना। अकगतौ लोट् ॥४१॥

अनुलोमगत्या चतुर्थवर्णादारभ्य श्लोकरूपं परिवर्त्तयन्नाह—

राज्ञा नालोकासामारा।
काभायादेका मायासा ॥४२॥

राज्ञा क्षत्रियेण न अलोका अदृश्या। अपितु दृश्यैव। पञ्चाग्नि-विद्याधिकारिणां क्षत्रियाणामपि ब्रह्मरूपिण्या वाग्देव्या दर्शनमभिमतम्। सामारा साम्नः अरः (ऋधातोरच्) प्राप्तिर्यत्र सा सामवेदधारिणीत्यर्थः। 'एष उ एव साम वाग् वै सामैष' (बृहदा० १।३।२२) 'वेदानां सामवेदोऽस्मी'ति सामधारणात् सर्ववेदधरत्वमायातम्। काभायात् एका माया सा इति च्छेदः। कः ब्रह्मा तस्मात् आभायाः आय आगमो यस्य तादृशः प्रजापति र्बृहस्पतिर्वा 'एष उ एव बृहस्पतिर्वाग् वै बृहती तस्या एष पतिः....बृहस्पतिः,' (बृह० ३।२१) तस्मादेका अनन्या, यथा प्रजापतिर्बृहस्पतिर्वा ब्रह्मण एव तेजसा दीप्तः तथा सरस्वत्यपि। माया आसः आसनं यस्याः....सा मायासा मायाधीश्वरीत्यर्थः ॥४२॥

विलोमक्रमेण चतुर्थवर्णादारभ्य पुनः श्लोकान्तरं विरचयन्नाह—

भाकारामा सा कालोना।
ज्ञारासाया माकादेया ॥४३॥

भाकारामासा–भा द्युतिरेव कारः क्रिया यस्य सः भाकारः सूर्यः तेन अमा सह आसः आसनं यस्याः सा 'य आदित्ये तिष्ठन्नादित्यादन्तरा यमादित्यो न वेद यस्यादित्यः शरीरं स आदित्यमन्तरो यमयत्येष त आत्मान्तर्याम्यमृतः'? (बृह. ३।७ब्रा. ९) अथच कालः ना न भवतीत्यर्थः। सूर्येण सह दिनमासर्तु-वत्सरात्मककालस्य साक्षात् सम्बन्धः। न तु सरस्वत्या सह, सातु कालस्यापि नियन्त्री। 'यः कारणानि निखिलानि तानि कालात्मयुक्तान्यधितिष्ठत्येकः' (श्वेत. १।१।३)। ज्ञारा ज्ञा ज्ञानं रातीति ज्ञानदायिनी, या मा माता सा कात् एया, कः विष्णुः तस्मात् एया लभ्या। विष्णुशक्तिरूपाया अस्या विष्णुप्रसादेन प्रसाद इति भावः ॥४३॥



अनुलोमगत्या 'पञ्चमवर्णादारभ्य श्लोकान्तर' सूचयन्नाह—

ज्ञानालोका सामाराका।
भायादेका मायासारा ॥४४॥

सा ज्ञा ज्ञानरूपा अनालोका चर्मचक्षुषा न दृश्या 'दृश्यते त्वग्र्यया बुद्ध्या सूक्ष्मया सूक्ष्मदर्शिभिः' इति श्रुतेः (कठोप. १।३।१२) मारः कामः तत्सम्बन्धि अकं दुःखं यत्र नास्ति सा अमाराका 'एकस्तथा सर्वभूतान्तरात्मा न लिप्यते लोकदुःखेन बाह्यः (कठोप. २।५।११) इति श्रुतेः। मायासा मायया आसो ग्रहणं येषां ते (म्वादिगणीयग्रहणार्थकास्धातो रूपम्) मायासाः मायाग्रस्ताः तेषामपि अरा अविभ्रमो यतः सा, रा विभ्रमः सा न भवतीति अरा, 'अरा इव रथनाभौ' (प्रश्नोप. २।६) इति विद्याया उदयादेव मायाया विनाशात्। एका द्वितीयरहिता भायात् भा दीप्तिरिव आचरतु, साधकानामभीष्टतया भारूपेण दर्शनमर्चितम्। तथाच श्रुतिः 'नीहारधूमार्कानिलानलानां खद्योतविद्युत् स्फटिकाशनीनाम्। एतानि रूपाणि पुरःसराणि ब्रह्मण्यभिव्यक्ति-कराणि योगे'' (श्वेता. २।११) ॥४४॥

विलोमक्रमानुसारेण षष्ठवर्णादुपक्रम्य श्लोकान्तरं पठयन्नाह—

रामा सा कालोना ज्ञा रा।
सायामाका देया भाका ॥४५॥

सा वाग्देवी रामा उत्कृष्टस्त्रीरूपिणी, कालः कृष्णवर्णः तेन ऊना रहिता सर्वशुक्ला सरस्वतीति स्मरणात्। ज्ञा सर्वज्ञा रा काञ्चनं 'विद्यारत्नं महाधन'मित्युक्तेः। सा यामाका–यमसम्बन्धि यद् अकं दुःखं यामाकं तस्य अभावः अयामाकं तेन सह वर्त्तमाना सायामाका। भा दीप्तिः कं शरीरं यस्याः सा ज्योतिर्मयीत्यर्थः। आदेया सगुणब्रह्मरूपेण सा अस्माभिः प्राप्तुं शक्या। एवमनुलोमविलोमक्रमेण श्लोकान्तराण्यपि सम्भवन्ति। विस्तरभिया विरम्यते। ॥४५॥

इदानीं माल्यमुपचारं प्रदातुमुपक्रमते—

मन्दारदामधरसुन्दरभा-सुसार-
मङ्गं तवामलतमम्मम सामधाम।
मध्येमनो मतिमव प्रियभावनाय
वित्तारतिं वितर लक्ष्मि! मरुन्नुताम् ॥४६॥

(माल्यबन्धः) चित्र संख्या–१८

हे लक्ष्मि ! श्रि ! हे मदल्ललाम ! मरुत्सु देवेषु ललाम भूषणस्वरूपे ! तव मन्दारदामधरसुन्दरभा-सुसारम् मन्दारपुष्पमालाशोभितं चारुकान्तिभास्वरम् अमलतमं परमशुभ्रम् अङ्गम् मम सामधाम शान्तिस्थानम् । तादृशरूपं ध्यायतो मे परमशान्तिरुदेतीति भावः । मम मध्येमनः मनसि स्थिता सती प्रियभावनाय इष्टवस्तुचिन्तायै मति धियम् अव रक्ष, यथाहं विषयकामनाग्रस्तो न भवेयं तथा पालय । वित्तार्ति वित्तेषु वितृष्णां वितर जनय । मन्दारदामेत्यादिशब्देन माल्यबन्धो व्यज्यते ।।४६।।

हारमुपचारं ददान आह—

> सिद्धं पदं सितपदन्तव भो दयाव-
> दित्थं मतं दिवि मनुष्यचये नुतञ्च ।
> चन्द्रानने ! चर नत-स्वजने तमोज-
> पङ्केऽहितापदि हि रक्ष सिमं रमासि ।।४७।।

(हारबन्धः) चित्र संख्या—१९

तव सितपदं शुभ्रचरणं सिद्धं पदं सिद्धस्थानं दयावत् दयाविशिष्टञ्च इत्थम् एवम् मतं दिवि स्वर्गे मनुष्यचये मर्त्ये च नुतं स्तुतम् । हे चन्द्रानने ! तमोजपङ्के अज्ञानजनितं पापं यस्य तादृशे नतस्वजने नम्रनिजजनविषये चर आविर्भूय विहारं कुरु । अहितापदि अनिष्टरूपविपदि सत्यां सिमं सर्वं रक्ष, त्वं रमासि लक्ष्मीरूपा भवसि । अतः सर्वेषामभिमतासि, विश्वरक्षणाय न ते बाधानुभवो भवेत् ।।४७।।

सम्प्रति काञ्चीदामोपचारदानमारभते—

> वाणी भूरिकलामेयाजघनासक्त-गौरवा ।
> सिद्धिभूरिद्धतां मे यात्वधुना सजयारवा ।।४८।।

(काञ्चीबन्धः) चित्र संख्या—२०

भूरिभिः कलाभिः मेया ज्ञेया अथवा भूरिकलास्वरूपा वाणी अतएव अमेया अपरिमेया अनन्ता इत्यर्थः । अजे विष्णौ घनं निबिडं यथा स्यात्तथा आसक्तं लग्नं गौरवं यस्याः सा । सिद्धीनां भूरुत्पत्तिस्थानम्, अधुना सजयारवा जयस्य आरवः जयध्वनिः मत्कृत इत्यर्थः, तेन वर्तमाना सा, मे इद्धतां यातु, मत्सम्बन्धिनी वाणी उदात्ता भवत्वित्यर्थः । काञ्चीव्यञ्जना यथा—भूरि स्वर्णम्, तत्र याः कलाः शिल्पकौशलानि ताभिः मेया । जघने कटिदेशे आसक्तगौरवेति ।।४८।।

चित्र संख्या—१८

माल्यबन्धः ।

[ मन्दारदामधरेत्यादि श्लोकः ४६ ]

पृष्ठम्—२३



[ सिद्धं पदं सितपदमित्यादि श्लोकः—४७ ]
पृष्ठम्—२४

वाग्देवतायाः वाहनादिभिः सज्जिते विग्रहे पञ्चगव्यस्नानार्थं गोमूत्रिकायाः संग्रहमभिप्रेत्य श्लोकद्वयमाह—

हिमस्तोमसमा सोमकोमला पापतापहा ।
हिता स्तोतुः सदा सोढकोकिलालापचापला ॥४९॥

(विषमाक्षरगोमूत्रिकाबन्धः) चित्र संख्या–२१

हिमस्तोमसमा–हिमस्तोमेन हिमराशिना समा शुभ्रवर्णेति भावः । सोमकोमला चन्द्रवत् स्निग्धा। पापस्य तापं पापतापौ वा हन्तीति । स्तोतुः सदा हिता मङ्गलकारिणी। सोढकोकिलालापचापला–वसन्तकाले वाग्देवतायाः पूजा विहिता, तदा कोकिलानामपि आलापचापलं देव्या सह्यते। एतेन तनयानां वाक्चापल्यमपि सोढव्यमिति व्यञ्जना । प्रथम-चरणस्यपद-त्रयेण व्यक्ता गोमूत्रिका ॥४९॥

समाक्षरगोमूत्रिकाबन्धः प्रदर्श्यते—

यदङ्गसद्विपञ्चिका प्रपञ्चरङ्गमञ्चिका ।
सुदर्शसर्गपञ्जिका विपङ्कुरम्यमल्लिका ॥५०॥

(समाक्षरगोमूत्रिकाबन्धः) चित्र संख्या–२२

तदङ्घ्रि-कम्रपल्लवे समस्तलोकवल्लभे ।
विशुद्धसत्त्वसम्भवे नतिस्तनोतु शम्भवे ॥५१॥

(युग्मकम्)

यदङ्गसद्विपञ्चिका–यस्याः अङ्गे सती विलसन्ती विपञ्चिका वीणा, प्रपञ्चस्य संसारस्य रङ्गमञ्चिका नाट्यमञ्चतुल्या, कुत इति ? यतः सा सुदर्शसर्गपञ्जिका सुखेन दृश्या सर्गस्य सृष्टेः पञ्जिका विवरणज्ञापिका पुस्तिकेत्यर्थः वाग्देव्या वीणाध्वनिद्वारैव सृष्टिः प्रवर्तते विश्वं जागर्ति च। तथाच श्रुतिः। 'यद्वै वाङ् नाभविष्यन्न धर्मो नाधर्मो व्यज्ञापयिष्यन्न सत्यं नानृतं न साधु नासाधु न हृदयज्ञो नाहृदयज्ञो वागेवैतत् सर्वं विज्ञापयति' (छा. उप. ७।२।१) । सा वीणा विपङ्कुरम्यमल्लिका पङ्कशून्या चारुमल्लीकुसुमतुल्या अतीव शुभ्रा। श्वेतवीणाधरेति प्रमाणात् । तस्या अङ्घ्रिकम्रकोमलपल्लवे नतिः नमस्कारः भवे शं कल्याणं तनोतु । कीदृशे अङ्घ्रिपल्लवे ? समस्तलोकवल्लभे निखिलजनप्रिये, विशुद्धसत्त्वस्य ज्ञानस्य भक्तेश्च सम्भवो यस्मात् तस्मिन् यत् प्रसादात् ज्ञानस्य भक्तेश्चोदयो भवतीत्यर्थः। श्लोकद्वये अन्त्यानुप्रासः। प्रथमे च समाक्षरगोमूत्रिकाबन्धः ॥५०–५१॥

इदानीं पूर्वोपचारं गन्धादिकं दातुं पुनरपि वृक्षबन्धप्रकारान्तरं सूचयन्नाह—

त्वं वाग्देवि! विदां कल्पविटपीव विराजसि।
सिद्धिपुष्पा सितच्छाया सिक्ताजररसैरपि ॥५२॥

(वृक्षबन्धः) चित्रसंख्या–२३

हे वाग्देवि! त्वं विदां विदुषां कल्पविटपीव कल्पवृक्ष इव विराजसि। तत्र हेतुः–सिद्धिः पुष्पमिव यस्याः सा, सिता कान्तिः सरस्वतीपक्षे, वृक्षपक्षे तु असिता छाया तेजस्तच्छादनञ्च यस्याः, अजररसैः अजरसां देवानां रसैः अनुरागैः सिक्ता आर्द्रीभूता; अथच अजररसैः दिव्यजलैः सिक्ता। लिङ्गविपरिणामेन वृक्षपक्षे विशेषणानि योग्यानि। वृक्षबन्धप्रकारान्तरं व्यज्यते वृक्षस्योपमेयतया सन्निवेशात् ॥५२॥

गन्धदानान्तरं पुष्पदाने कर्तव्ये चतुर्दलपद्ममुपदीकुर्वन् कविश्चतुर्दलपद्मबन्धमुपस्थापयति—

भारते भक्तिसुलभा भालचन्द्रजितस्वभा।
भास्वद्वीणाढ्यकरभा भारती भातु हीरभा ॥५३॥

(चतुर्दलपद्मबन्धः) चित्रसंख्या–२४

भारते कर्मक्षेत्रत्वे भारताख्यदेशे–तथाच विष्णुपुराणम्–'गायन्ति देवाः खलु गीतकानि धन्यास्तु ते भारतभूमिभागे' इति, भक्त्या सुलभा, "गुरुशुश्रूषया विद्येति स्मरणाच्च शुश्रूषाजनितभक्ति-विशेषेण विद्यायाः सुलभत्वम्। भालचन्द्रेण जितस्वभा जितानि स्वानि तेजोरूपधनानि येषां तादृशानि जितस्वानि भानि नक्षत्राणि यया सा। भास्वन्ती शुभ्रतया उज्ज्वला या वीणा तया आढ्यः अलंकृतः करभः "करस्य करभो बहिः" यस्याः सा। स्वयं हीरभा हीरवत् निर्मलकान्तिः भारती देवी भातु॥ भालचन्द्रेत्यादिविशेषणेन पद्मबन्धो व्यज्यते चन्द्रकरेण जितत्वं पद्मस्येति प्रसिद्धम् ॥५३॥

अष्टदलपद्ममिदानीमुपस्थापयितुमष्टदलपद्मबन्धं रचयति—

सारदा सारसाध्यासा साध्या साच्युतवेधसा।
साधवे दत्तसातास्तु स्तुता साद्य सदारसा ॥५४॥

(अष्टदलपद्मबन्धः) चित्र संख्या–२५



वीणाबन्धः। चित्रसंख्या–११

[ हिमस्तोमसमेत्यादि श्लोकः—४९
पृष्ठम्—२५

चतुर्दलपद्मबन्धः—　　चित्र संख्या—२४



[ भारते भक्तिसुलभेत्यादि श्लोकः—५३ ]

पृष्ठम्—२६




[ सारदा सारसेत्यादि श्लोकः—५४
पृष्ठम्—२६

साच्युतवेधसा—अच्युतेन सह वर्त्तमानो यो वेधाः विधाता तेन साध्या राध्या उभयोः शक्तिरूपत्वात्। सारसाध्यासा सारसं पद्मम् अध्यासः आसनं यस्याः सा। सदारसा नित्यानन्दमयी सा सारदा सरस्वती अद्य संस्तुता सती साधवे सज्जनाय दत्तसाता दत्तं सातं सुखं यया सा तथा अस्तु॥ सारस-सदारसशब्दाभ्यां पद्मबन्धो व्यज्यते ॥५४॥

पुनरष्टदलपद्ममुपहर्तुमाह—

रमसेऽमरवासे वा रसे रासे रवौ छवौ।
रसनासरसीं दासीं रक्ष नोऽक्षरदे पदे ॥५५॥

(अष्टदलपद्मबन्धप्रकारान्तरम्) चित्र संख्या–२८

त्वम् अमरवासे स्वर्गे रमसे विहरसि, रसे जले सरस्वतीति नदीनामसाम्यात् अथवा रसे आनन्दे ब्रह्मस्वरूपत्वात् रासे शब्दे वाग्देवतात्वात् रवौ रविबिम्बे तेजस्वित्वात्, छवौ ज्योतिर्मण्डलस्य द्युतिमात्रे स्वच्छत्वात्-यत्र कुत्रापि विलसतु नाम भवती, प्रार्थनेयमस्माकं यत्तव अक्षरदे ब्रह्मप्रदे चरणे नः अस्माकं रसनासरसीं जिह्वारूपं जलाशयं दासीं विधेयां रक्ष। सरोजोपरि चरणस्थापनं भवत्याः सिद्धमेव, रसनासरसीं दासीं कुर्वत्या न क्लेशान्तरं सम्भवेत् ॥ अत्रापि सरसीशब्दव्यङ्ग्यः पद्मबन्धः ॥५५॥

अन्यदष्टदलपद्ममुपदीकुर्वन्नाह—

या मातृस्थायितत्त्वा विदिततत‍दिवि स्वर्कभा क्षेमकाया
या कामक्षेपरक्ता विमददमविद् यत्रमात्रानुधेया।
या धेनुत्राक्षपाणिर्वरददरवप्रेष्ठभव्यावसाया
या सावव्यात् सुशान्त्यै तनुगगनुतश्रीर्लये स्थातृमाया ॥५६॥

(अष्टदलपद्मबन्धस्य प्रकारभेदः) चित्र संख्या–२७

मातरि मातृकावर्णे स्थायि स्थिरं तत्त्वं स्वरूपं यस्याः सा, विदिततत‍दिवि विदितायाम् अस्मदनुभवगोचरे ततायां विस्तृतायां दिवि सुरधाने स्वर्कभा शोभनरविबिम्बस्वरूपा, क्षेमकाया मङ्गलमयतनुः, या कामक्षेपे जनानां कामत्यागे तद्विषये रक्ता अनुरागवती, विद्याधिगमादविद्यानाशः अविद्यानाशाद्

रागद्वेषनाशः तेन च कामनानाशो भवति। विमदो गर्वहीनता विनय इति यावत् तं ददातीति विमददः तादृशो यो दमो बहिरिन्द्रियनिग्रहः तं वेत्ति विन्दते वा, विनयवतो जितेन्द्रियपुरुषस्य यत्नमात्रेण अनुध्येया अनुसन्धेया श्रेयेत्यर्थः। या धेनुवा 'धेनुं वाचमुपासीते'ति श्रुतिः (बृह० ५।८।१)। धेनुं वाचं त्रायते वागीश्वरीत्यर्थः। अक्षपाणिः अक्षमालायुक्तकरा वरो महान् यो दददरवः (दत्त दयध्वं दाम्यत) इत्युपनिषदुक्तः तद्रूपं यत् श्रेष्ठभव्यं प्रियतम-कल्याणम् अभ्युदयरूपं तस्मादवतायो निश्चयो यस्याः सा। यस्या ब्रह्मस्वरूपं देवासुर-मनुष्येषु दददरव-सूचितेन दानदमनदयारूपधर्मेण निर्णीयते। या तनुगगननुतश्रीः—तनुगः सूक्ष्मगतिः यो गः गन्धर्वः तस्य येन गानेन नुता स्तुता श्रीर्यस्याः सा। वेदाः सर्वाणि शास्त्राणि नृत्यगीतादिकञ्च यत्। न विहीनं त्वया देवि तानि मे सन्तु सिद्धयः॥' 'गानात् परतरं नहि' इति शास्त्रेण च गीतस्यापि मोक्षप्रदस्य सरस्वत्यधीनत्वम्। लये अपायकाले या स्थातृमाया स्थितिरूपिणी माया सात्त्विकत्वात् रक्षाशीलेति यावत्। असौ सुशान्त्यं अव्यात् रक्ष्यात् भारतमिति शेषः। कवेः पितृचरणानामुपाधिवर्णाङ्कितपाठशालायाः स्मरणाय पद्मदलाग्रवर्त्ति-वर्ण-योजनया "तर्करत्न-पाठशाल्या" इति भट्टपल्लीस्थपाठशाला रचनास्थानं लभ्यते। दुष्करोऽयं बन्धः ॥५६॥

पुनरप्यष्टदलपद्ममुपहरति—

> कामना-नामकासारे देवि नाना-विदेषणा।
> का विना नाविकाङ्घ्री ते तौ हि ना नाहितौ भजेत् ॥५७॥

(पद्मबन्धप्रकारान्तरम्) चित्र संख्या—२८

कामनानामतडागे संसाररूपिणीत्यर्थः। विदां पण्डितानां नाना बहुविधा एषणा अनुसन्धानं ते तव नाविकाङ्घ्री नाविकरूपं चरणद्वयं विना का व्यर्थैवेत्यर्थः। अतएव ना पुरुषः तौ पादौ नाहितौ न अहितौ अर्थात् मङ्गलमयौ भजेत्। हि निश्चये। महति तडागे शुक्तिमुक्तानुसन्धानमिच्छतः पुरुषस्य यथा नाविकावावश्यको भवतस्तथा कामनामयेऽस्मिन् संसारे मुक्तिकामस्य विदुषो देवीचरणद्वयमेव शरणम्। तदेव गवेषणाविषयो नान्यः पन्था विद्यत इति भावः। कासारशब्दस्याङ्कप्रपद्मबन्धोऽयम् ॥५७॥

अष्टदलपद्मभेदः। चित्र संख्या—२६

अष्टदलपद्मभेदः
चित्रसंख्या - २६

रमसेऽमरबासेवेत्यादि श्लोकः—५५
पृष्ठम्—२७




अष्टदलपद्मबन्धप्रकारभेदः। चित्रसंख्या - २७

[ या मातृस्थायितरवेरयादि श्लोकः—५६ ]

अन्यविधमष्टदलपद्मं देवीपदयोरुपस्थापयति—

श्रीस्त्वं सत्या शिशिरपरुषस्पर्शदूनद्रुकाय-
जीर्णच्छायां रचयसि रुचा चारुमुच्चैर्विभातो ।
वर्णे वस्त्रे वपुषि तरुणे पुस्तके पुष्पसार्थ-
न्यासे हासे स्वगुणगुरुताशंसिनी नो न शं स्य ॥५८॥

(अष्टदलपद्मबन्धप्रकारभेदः) चित्र संख्या–२९

त्वं सत्या श्रीः सरस्वती शोभा च भवसि। यतः त्वम् उच्चैर्विभाती शोभमाना सती शिशिरस्य शीतस्य परुषः कठोरो यः स्पर्शः तेन दूनस्य रुग्णस्य द्रुकायस्य वृक्षशरीरस्य जीर्णच्छायां म्लानकान्ति रुचा स्वकान्त्या चारुं मनोज्ञां रचयसि करोषि। पञ्चम्यां श्रियं पूजयेदिति माघे वसन्तपञ्चम्यामेव देव्याः पूजादिकं विशेषेण विहितम्। अपिच त्वं निजे वर्णे वस्त्रे तरुणे चिरनवीने वपुषि (करस्थिते) पुस्तके पुष्पसार्थन्यासे पूजासमये न्यस्तपुष्पौघचये हासे च स्वगुणस्य श्वेतिम्नः गुरुतां महत्त्वं शंसितु शीलमस्याः सा तत्र तत्र शुभ्रतातिशयं प्रकाश्य सत्या श्रीरसीत्यन्वयः। अस्माकं शं कल्याणं न स्य न नाशय। श्रीरूपाया भवत्याः प्रसादाभाव एव नः कल्याणनाशे हेतुर्भवेत् स न भवत्विति प्रार्थना। अस्मिन् पद्मबन्धे पद्मदलाग्रान्तर्वर्तिभिर्वर्णैः 'श्रीजीवन्यायतीर्थस्य' इति सोपाधिककविनाम लभ्यते ॥५८॥

इदानीं द्वादशदल-पद्मबन्धं सूचयितु तादृशपद्यमुपहरति—

कायिनाम्भजतामेका कामे तापानुभाविका ।
का विभा ज्योतिरलका कालरङ्गा द्युनायिका ॥५९॥

(द्वादशदलपद्मबन्धः) चित्र संख्या–३०

का विभा शारस्वती दीप्तिः भजतां भजनपरायणानां कायिनां देहिनां कामे भोगेच्छायाम् एका असाधारणी तापानुभाविका क्लेशस्योद्बोधिका। विद्यया भोगेच्छानिदानभूताविद्या नाश्यत इति भावः। ज्योतिरलका द्युतियुक्ताः अलकाश्चूर्णकुन्तलाः यस्याः सा चन्द्रयुक्तललाटत्वाद् अलकानां दीप्तिमत्त्वम्। कालरङ्गा कालेन सह रङ्गः क्रीडा यस्याः सा। कालो मृत्युः, विद्या जीवान् मृत्युकरात्त्रायत इति कालेन सह विद्यायाःक्रीडा। द्युनायिका सुरलोकनेत्रीत्यर्थः। द्वादशदलपद्मबन्धः ॥५९॥

ततः षोडशदलपद्मनुपहरन्नाह—

मखे मन्त्रमयीमम्बां मठमध्ये महीमयीम् ।
मणौ महोमयीमर्चां मञ्जुमर्च मनो मम ॥६०॥

(षोडशदलपद्मबन्धो गोमूत्रिकाधेनुबन्धश्च) चित्र संख्या—३१

मखे यज्ञे मन्त्रमयी, मठमध्ये देवालयमध्ये महीमयी, मृण्मयी, मणौ मणिमयविग्रहे महोमयी तेजोमयी अर्च्चा प्रतिमा सैव अम्बा माता। तां मञ्जुं मनोज्ञां मम मनः सम्बोधने अर्च पूजय ॥६०॥

चतुर्विंशतिदलकुमुदमुपहारमादधान आह—

त्वं विश्वविद्या विधिविष्णुविन्ना
रविच्छविस्त्वं विधुविम्बविष्टा ।
संवित् पवित्रा विधिवित्सुविप्रे
त्वं विद्सु वित्तं विभुबिन्दुवित्त्वम् ॥६१॥

(चतुर्विंशतिदलकुमुदबन्धः) चित्र संख्या—३२

त्वं विश्वविद्या विश्वस्य जगतो विद्या 'वेदाः शास्त्राणि सर्वाणि नृत्यगीतादिकञ्च यत् । न विहीनं त्वया देवी'ति स्मरणात् । विधिना विष्णुना च विन्ना परिगृहीता । त्वं रवेश्छविः कान्तिः, विधुविम्बे चन्द्रमण्डले विष्टा प्रविष्टा । विधिविदि अनुष्ठान-विधानज्ञे सुविप्रे सुब्राह्मणे विषये त्वं पवित्रा संवित् आस्तिक्ययुता बुद्धिः । विद्सु वैश्येषु त्वं वित्तं धनरूपा, विभुं परममहत्परिमाणं बिन्दुं परमाणुपरिमाणञ्च विन्दसि स्वरूपतो लभसे । अणोरणीयान् महतो महीयानिति श्रुतेः (कठोप० १।२।२०) । अतस्त्वं ब्रह्मरूपिणी । चतुर्विंशतिदल-कुमुदबन्धोऽयम् ॥६१॥

पद्म-पुष्पाञ्जलिदानार्थमुपक्रमते—

या भाषा भाति भासा परमरसरतिख्याति-भूति-प्रतिष्ठा
ज्ञानाधानाज्जनानां विशदशशिशतच्छायकायप्रियश्रीः ।
यामो व्यामोह-मोक्षन्त्वहरहरिह यत् क्षेमयुङ् मञ्जुमन्त्रैः
सा दद्यादद्य दर्शं तिमिरमिव मिलन् मोहमंहश्च हन्तु ॥६२॥

(महापद्मबन्धः) चित्र संख्या—३३

अष्टदलपद्मबन्धभेदः । चित्र संख्या—२९

अष्टदलपद्मबन्धः
चित्रसंख्या - २९

श्रीस्त्वं सत्या शिशिरपरुषेत्यादि श्लोकः—५८
पृष्ठम्—२९

चतुर्विंशतिदलकुमुदबन्धः    चित्र संख्या—३२




त्वं विश्वविश्वे त्यादि श्लोकः—६१
पृष्ठम्—३०



या भाषा भाति मालेत्यादि श्लोकः—६२

पृष्ठम्—३०

या भाषा वाग्देवी परमरसरतिख्यातिभूति-प्रतिष्ठा—परमरसे ब्रह्मणि या रतिः अथवा परमरसः परमानन्दः रतिः शुभभावानुरागः, तथा ख्यातिः यशः, भूतिः सम्पत् तत्र प्रतिष्ठा सिद्धिर्यतः सा। कुतः कारणात् सिद्धिः सम्भवति? जनानां ज्ञानाधानात् ज्ञानप्रदानात्। सा विमलशतचन्द्रवत् शुभ्रकाया अतएव प्रियश्रीः नवनाकर्षकशोभायुक्ता। भासा दीप्त्या उपलक्षिता भाति। यत्क्षेमयुङ्मञ्जुमन्त्रैः यस्याः क्षेमंकरशोभनमन्त्रयोगेन वयम् अहरहः प्रतिदिनं व्यामोहमोक्षं विभ्रमात्परित्राणं प्राप्नुमः, सा अद्य दर्शं दर्शनं दत्तात् ददातु। मिलत् विलोक्यमानं तिमिरमिव मोहम् अज्ञानम् अंहः पापञ्च हन्तु विनाशयतु। शुभ्रद्युतिसन्निधौ यथा तिमिरं दूरं याति तद्वत् अज्ञानं पापञ्च दूरं यातु। कर्णिकावर्णयोजनेन 'भारति नाशय मोहमदमिह' वाक्यमिदं लभ्यते। परमरसप्रतिष्ठेति शब्दव्यञ्ज्यो महापद्मबन्धोऽयम् ॥६२॥

लतातन्तुग्रथितं पुष्पमाल्यमुपदीकर्त्तुमाह—

लीलाबालाविलासा युवतिबलवती भारती रम्यरङ्गा
माता ख्याता स्मितांशुस्मृतशतसितगुर्मालिभालप्रलक्ष्मीः।
आशापाशार्त्तिशान्त्यै स्फुरतुरतुरसा श्वेतपूतत्रितन्त्री-
नादह्लादप्रदश्रीः सकलकविकलाकौशलं शन्दिशन्ती ॥६३॥

(लताबन्धः) चित्र संख्या–३४

लीलया बालाया वीणावादनादिरूपो विलासो यस्याः सा, अथच स्तनभरनमिताङ्गीति युवतिबलयुक्ता, रम्यरङ्गा सृष्टिस्थितिरूपमधुरक्रीडामयी ख्याता प्रसिद्धा माता स्मितांशुस्मृतशतसितगुः मन्दहास्यप्रभया शतचन्द्र-प्रभाज्ञानं भवति भालदीप्तौ लक्ष्मीर्लग्नेव भाति। जीवानाम् आशापाशार्त्तिशान्त्यै आशाजालक्लेशशान्तये रतुरसा रतुर्देवनदी (शब्दकल्पद्रुमप्रमाणात्) तस्या रस इव रसो यस्याः सा रतुरसा भारती स्फुरतु आविर्भवतु। कीदृशी पुनः सा? शुभ्रपूतवीणानादजनितानन्दप्रदा श्रीः सम्पद् यस्याः सा। सकलकवीनां कलाकौशलं तद्रूपं मञ्जुलं दिशन्ती ददाना सती। स्फुरतु आविर्भवतु। लीलाबाला-विलासपाशादिशब्दैर्लताबन्धो-व्यज्यते ॥६३॥

पुनः पद्मपुष्पाञ्जलिमुपचारं ददान आह—

श्रीः कालभावितनुरागमनामिका श्रीः
श्रीः कामिनामपि गतिर्वसुदारपा श्रीः।
श्रीः पारदा सुरभियां तमसोऽन्तिका श्रीः
श्रीः कान्तिसोममिलितस्वविभालका श्रीः ॥६४॥

(पद्मबन्धप्रकारभेदः) चित्र संख्या–३५

श्रीः कालभावितनुः काऽं भावयितुं जनयितुं शीलमस्याः सा कालभाविनी, तादृशी तनुर्यस्याः सा । ज्ञानाधीनत्वं दिनमासादिकालस्य व्यवहारसाधनाय। आगमनायिका वेदः शास्त्रं वा नाम यस्याः सा एवम्भूता श्रीः । सा कामिनामपि गतिः यतः वसूनि धनानि दारान् स्त्रियः पाति या सा (विद्या ददाति विनयं विनयात् पात्रतां पात्रत्वाद् धनम्) श्रीः सुरभियां देवानां भयानां पारदा पारदायिनी, ज्ञानबलेन देवा असुरान् पराजयन्ते—तादृशी श्रीः । तमसो अज्ञानस्य अन्तिका नाशिका श्रीः कान्तिसोममिलितस्वविभालका कान्तिप्रधानसोमेन मिलिता या स्वविभा निजद्युतिः यस्याः सा तथा अलकाश्रीः अलकायाः यक्षनगर्याः, श्रीरिव श्रीर्यस्याः सा । अष्टानां 'श्री' पदानां मति-सरस्वती-वृद्धि-लक्ष्मी-सिद्धि-प्रभा-विभूति-शोभा इत्यष्टावर्थाः यथाक्रमं ग्रहणीयाः ।

अलकापक्षेऽपि—कालभावी शिवः तस्य तनुः विग्रहो यत्र कैलाससमीप एवाल-कायाः स्थानम् । आगमे शास्त्रे नाम यस्याः सा, शास्त्रे अलकाया नाम लभ्यते । कामिनामपि गतिः यक्षावास इति प्रसिद्धिः । यक्षनगरतया धनरक्षणं दारपाल-नञ्च सम्यग् भवति । स्वर्गाश्रिराकृता देवा कैलासैकदेशमलकामाश्रयन्ति । सदा समुज्ज्वला, तमोयोगो नास्ति । पद्मबन्धप्रकारभेदः । श्रीपदेन श्रीनिकेतनपद्ममालाया व्यञ्जपरत्वम् ॥६४॥

पुनरपि पद्ममालान्तरमुपदीकरोति—

उत्तमरति-लोकसुमति-कमलोद्गतिदायिके<br>
कमलोद्भव-कमलाधव-तोषिणि भवनायिके ।<br>
एहि जननि ! मोहरजनिभञ्जिनि जनिनाशिके<br>
भुवि विराज सुरसमाजसुख-सरोजवासिके ॥६५॥

(पद्ममालाबन्धप्रकारान्तरम्) चित्र संख्या—३६

हे कमलोद्भव-कमलाधव-तोषिणि ! ब्रह्म-विष्णु-तोषिणि! भवस्य नायिके संसारस्य परिचालिके ! उत्तमा रतिर्यस्य स तादृशो यो लोकः तस्य सुमतिरूपा कमलोद्गतिः शुभबोधरूपपद्मोदयः तां ददाति या सा । जननि एहि। हे मोहरजनिभञ्जिनि ! अज्ञानरूप-निशावसानकारिणि ! जन्महरणि ! देवता-समाजरूप-सुखकरपद्ममध्यवासिनी त्वं भुवि विराज । वयं भूस्थाः भूतले त्वां द्रष्टुमिच्छामः । रूपकालङ्कारः । कमल-सुख-सरोजादि शब्दव्यञ्जक पद्ममालाबन्धः ॥६५॥




श्रीः कालभावितनुरित्यादि श्लोकः—६४

पृष्ठम्—३१

पुनरन्यां पद्ममालिकां दातुकाम आह—

> सारावनाय ततसातयशाः पिपासा-
> सा पापिहृद्वररसा रवमूलवासा ।
> सा बालभावहृहसा हवचिद्विलासा
> साला विभातु मम सामतुलाधरासा ॥६६॥

(पद्ममालिकाबन्धः) चित्र संख्या—३७

सारावनाय आराधनासहिताय साधकायेत्यर्थः। ततं वितीर्णं दत्तमिति यावत्, सातं सुखं यशश्च यया सा। पिपासासा पिपासां स्यति 'सो य नाशे' इति विवप्, तृष्णानाशिनी, अपापिहृद्वररसा—अपापिनां पुण्यात्मनां हृत्सु वरः श्रेष्ठः रसः आनन्दो यतः सा। रवमूलवासा रवः नादः तस्य मूलं मूलाधारस्थानं यत्र परानाम्नी नादशक्तिः श्रूयते तत्र वासो यस्याः सा। परा वाक् चतुर्दलपद्मे मूलाधारे, पश्यन्ती नाभिमूले दशदलपद्मे मणिपूरके, मध्यमा द्वादशदल पद्मे हृदये आहताख्यचक्रे, वैखरी च षोडशदलपद्मे विशुद्धचक्रे कण्ठदेशे सम्प्रकाशा भवति। सा वाणी बालानां निजकेशानां भा दीप्तिः तां वहतीति बालभावहः तादृशः हसः हास्यं यस्याः सा, यस्या हास्यरश्मिभिः केशा अपि दीप्ता भवन्ति। अथवा बालभावो जाड्यं तं हन्तीति हन् धातोः डप्रत्ययः। बालभावहः हसः हास्यं यस्याः सा। यस्याः प्रसन्नमुखस्य हास्यमात्रेण जाड्यं दूरीभवतीत्यर्थः। हवचिद्विलासा—हवे होमे यज्ञे वा चितःज्ञानस्य विलासो विकासो यतः सा 'ब्राह्मणा विविदिषन्ति यज्ञेन' इति श्रुतेः (बृह० ४।४।) निष्कामयज्ञानुष्ठानेन वाग्देवीकृपयैव ज्ञानोदयो भवति। साला गृहरूपिणी, आश्रयभूतास्माकमित्यर्थः; सामतुलाधरासा—साम शान्तिः तद्रूपा या तुला दारुबन्धन-पीठिका तस्याः धरः (धरतीति धरः) तादृशः आसः स्थिति र्यस्याः सा, यथा तुलादारु गृहस्थितौ मुख्यमुपकरणम्, तथास्माकं ज्ञानविधाने सैव मुख्यं निदानमिति भावः। अथवा रलयोरभेदात् साला सारा श्रेष्ठा साम्नः सामवेदस्य तुला भाण्डम्। अधरासा—न धरायाम् आसः आसनं यस्याः सा, स्वरूपेण दिव्या। सा विभातु साधकदर्शनगोचरो भवतु ॥६६॥

इदानीं मठादिविविधद्रव्योपचारदानं चिकीर्षुस्तत्तद्बन्ध-विशेषान् प्रदर्शयन्नि—

> का त्वं दुग्धाब्धिमध्ये मणिगणघटितश्वेतरुग्द्वीपदीप्र-
> प्रष्ठ-श्री-वज्रवद्धस्फटिकमयमठे रत्नपीठेऽङ्कनैका।
> कामं नित्याश्रितश्रिण्यचिरजजलजे भासि शुभ्रास्य-हास्य-
> प्रह्वा प्रोद्भास्यमान-त्रिभुवननटनव्यञ्जना रञ्जिताङ्घ्रि ॥६७॥

(मठबन्धः) चित्र संख्या—३८

हे देवि त्वं दुग्धाब्धिमध्ये क्षीरसमुद्रमध्ये मणिगणघटितं यत् श्वेतरुक् शुभ्रवर्णं द्वीपं तत्र दोप्रा उज्ज्वला या प्रष्ठा अग्रवर्त्तिनी श्रीःयस्य तादृशं यद् वज्रं हीरकं तेन बद्धः स्फटिकमयमठः तत्र वर्त्तमाने रत्नपीठे एका अद्वितीया अङ्गना का ? नित्याश्रितश्रिणि नित्यम् आश्रिता श्रीः शोभा यस्य तादृशे अचिरजजलजे सद्यो-विकचे पद्मे रञ्जितश्रि रञ्जिता उज्ज्वलीकृता अश्रयःपद्मदलकोणा यथा स्यात्तथा, कामं पर्य्याप्तं भासि दीप्यसे। त्वं पुनः कीदृशी ? शुभ्रास्यहास्यप्रह्वा-शुभ्रं आस्यहास्यं यस्याः सा च प्रह्वा चेति ईषन्नताङ्गी, कुचभरनमिताङ्गीति ध्यानोक्तेः पुनः कीदृशी ? प्रोद्भास्यमानत्रिभुवननटन-व्यञ्जना प्रोद्भास्यमानं प्रकाश्यमानं यत् त्रिभुवनस्य नटनं नर्त्तनं जगज्जीवानां जीवन-स्पन्दनमित्यर्थः। तदेव व्यञ्जनं लक्षणं यस्याः सा। 'यतो वा इमानि भूतानि जायन्ते येन जातानि जीवन्ति' इत्यादि श्रुतेः जगत्पालनं ब्रह्मणो लक्षणम्। वाग्देवीपूजने आधारशक्त्यादि-पीठदेवतापूजापि सूच्यते। मठशब्दश्लेषो मठबन्धोऽयम् ॥६७॥

रथमुपहर्त्तुं प्रस्तौति—

तन्त्रे तल्पतले तता तव तनुस्तर्के तते चास्तरे<br>
तत्त्वं तथ्यतटे तथातनुतपस्तल्ले तरिर्दुस्तरे।<br>
रेखा चान्द्रमसी ह्रसीममहिमश्वेताभया भस्मभ-<br>
रेखा-चापतया त्वया त्वलिकलिड् व्यक्ता निजे निर्जनि ॥६८॥

(रथबन्धः) चित्रसंख्या—३९

हे देवि ! तन्त्रे शास्त्ररूपे तल्पतले शय्यातले तर्के युक्तिरूपे तते वीणादि-वाद्यरूपे च आस्तरे आच्छादनवस्त्रे (ततं वीणादिकं वाद्यमित्यमरः) तता विस्तृता तव तनुः। नीरसे तर्के सरसे वाग्वादी तथा समग्रशास्त्रे त्वमेव प्रभवसि-तत् सर्वं त्वम्। तथा तथ्यतटे तथ्यं सत्यमेव तटं यस्य तादृशे दुस्तरे अतनुतपस्तल्ले कठोरतपोरूपजलाधारे तरिः पारदा भवसि। हे निजे ! आत्मीये ! मातरित्यर्थः। हे निर्जनि ! जन्मरहिते ! अलिकलिट् भालस्था चान्द्रमसी रेखा शशिलेखा हि तव असीम-महिमश्वेताभया, सातिशयगौरवार्ह-शुभ्रकान्त्या भस्मभरेखाचापतया भस्मवद्भातीति भस्मभं यद् रेखारूपं छद्मरूपं चापं धनुः प्रणवात्मकं ('प्रणवो धनुः शरो ह्यात्मे'त्यादिश्रुतेः) तत्स्वरूपेण त्वया व्यक्ता प्रकटीकृता। भालस्थचन्द्रकला तव शुभ्रप्रभातिशयेन भस्ममयधनूरूपेण त्वया प्रणवः प्रकाश्यत इति भावः। आद्यचरणद्वितयेन देव्या ज्ञानरूपता, अन्तिमचरणद्वयेन तस्या ब्रह्मसाधारण-नैर्मल्यातिशयो द्योत्यते। बन्धस्य दुर्घटतया छन्दो भाषानवबोधविकटता च सुधीभिः कृपया सोढव्या। रथबन्धोऽयम् ॥६८॥

पद्ममालिकाबन्धः। चित्र संख्या—३७

साराधनाय तत सातेत्यादि श्लोकः—६६

पृष्ठम्—३३

विमानोपहारमिदानीं प्रतिपादयन्नाह—

विद्या विभा विश्वविभूतिभूमा
माता प्रसन्नाननशीतधामा ।
मा हीयतां नो विविधार्थदा मा
मायातटज्ञाननदीनरूपा ॥६९॥

(विमानबन्धः) चित्र संख्या–४०

विद्या विभा ज्योतिः स्वरूपा विद्यया सर्वं प्रकाशत इत्यर्थः । विश्वविभूति-भूमा विश्वस्य या विभूतिः ऐश्वर्यं तस्य भूमा बाहुल्यम्, अन्यदैश्वर्यमल्पं विद्यैव महदैश्वर्यम् । विद्या प्रसन्नाननशीतधामा माता, प्रसन्नमुखचन्द्रा मातृरूपिणी, कदापि ततो न तापशंकेत्यर्थः । विद्या माया-तट-ज्ञाननदीनरूपा माया तटं यस्य तादृशी या ज्ञाननदीनः ज्ञानसमुद्रः तद्रूपा । 'विद्याञ्चाविद्याञ्च यस्तद् वेदोभयं सह' इत्यादि (ईशोप० ११) श्रुतेः । विद्या नोऽस्माकं विविधार्थदा नानासम्पत्प्रदा मा लक्ष्मीस्वरूपा । मा हीयताम् । न त्यज्यतामस्माभिरिति शेषः । नवीनोऽयमन्यतमो बन्धः । 'विमानबन्ध'नामा । विद्या-माया-नदीनशब्देभ्यो 'विमान' बंधव्यञ्जना चित्रदर्शनेन विधुर्पंरूह्या ।।६९।।

धेनूपहारदानार्थमारभते—

सुराराध्यामृतासारा चतुष्पादा च कामदा ।
कापि गौरस्तु रम्याङ्गा सशृङ्गा वर्णभासुरा ॥७०॥

(धेनुबन्धः) चित्रसंख्या–४१

सुरैः आराध्या सेव्या अमृता न मृता ध्वंसाप्रतियोगिनी नित्येति भावः । सारा श्रेष्ठा चतुष्पादा पादचतुष्टयवती प्राधान्येन च्छन्दोमयी कापि गौः वाक् कामदा कामधुक् अस्तु । रम्याणि अङ्गानि शिक्षाकल्पादीनि यस्याः सा, सशृङ्गा शृङ्गं पङ्कजं (अम्बररत्नावलीप्रमाणात्) तेन सह वर्त्तमाना पङ्कजासीनेत्यर्थः । सोत्कर्षा वा अथवा शृङ्गं चिह्नं वीणारूपं तेन सह वर्त्तमाना । वर्णैः अकारादिक्षकारान्तैः पञ्चाशद्भिरक्षरैः भासुरा उज्ज्वला । 'धेनुं वाचमुपासीते'ति श्रुतिः । अथच कपि धेनुः सुरा शोभनधनरूपा, आराध्या पूज्या, अमृतस्य दुग्धस्य आसारः धारापातो यस्याः सा, वर्णभासुरा वर्णैः कृष्णश्वेतादिभिः प्रकाशशीला । उक्तश्रुतिमूलक समाप्यङ्ग:, धेनुबन्धोऽपि व्यज्यते । नवीनकल्पनासिद्धोऽयं बन्धः ।।७०।।

गजोपहारमाकाङ्क्षन्नाह—

उद्यतो वरदानाय दासाना दारणोऽहंसाम् ।
रदाभाढ्यो हसन्त्यास्ते स करः सहसां वरः ॥७१॥

(गजबन्धः) चित्रसंख्या–४२

हसन्त्यास्ते रदाभाढ्यो वरदानाय उद्यतः दासानाम् अहंसां दारणः करः सहसां वर इत्यन्वयः। हे देवि ! हसन्त्याः हास्यं कुर्वत्याः तव रदाभया दन्तप्रभया आढ्यः उज्ज्वलः भक्तं प्रति वरदानाय उद्यतः दासानां किंकरायमाणानां त्वदुपासकानामित्यर्थः। अंहसां पापानां दारणः निवारणः स प्रसिद्धः करः सहसां ज्योतिषां वरः श्रेष्ठः। यथा ज्योतिःप्रधानेन सूर्येण तमोऽपह्रियते तथा तव वरदः करः सभमसनाशकः। एतेनाङ्गमात्रेण ते सूर्यसादृश्यमधिक्रियत इति व्यतिरेकव्यङ्ग्यः। उद्यतकर-रदादिशब्दै गंजरूपदस्तु व्यज्यते ॥७१॥

अश्वदानमिच्छन्नाह–

त्वरया तमसां तन्द्री तयापह्रियतेऽनसा ।
तत्तदागमविश्वासाद् विद्रुतं विविधैनसा ॥७२॥

(अश्वबन्धः) चित्रसंख्या–४३

तया अनसा मात्रा त्वरया तमसां मोहकामादीनां तन्द्री निद्रा अभिभूततेति यावत् अपह्रियते दूरीक्रियते। तत् तस्मात् तदागमविश्वासात् तस्या देव्या आगमन-प्रत्ययमात्रेण विविधैनसा नानाविधपापेन विद्रुतं पलायितम्। मोहकामादिनाशात् पापनाशो भवतीति भावः। अथच तत्स्वरूपस्य शास्त्रस्योपरि विश्वासात् पापापगमो भवति। "ज्ञानप्लवेनैव वृजिनं सन्तरिष्यसीति गीतावाक्यम्। शास्त्रस्य ज्ञानमूर्तित्वं शास्त्राधिष्ठात्री च सा देवी वाक्। अत्र शकटार्थकस्यानः शब्दस्यापहरणविद्रुतादिशब्दस्य च प्रयोगोऽश्वबन्धं व्यञ्जयति ॥७२॥

नौकादानमभिलषन्नाह—

स्वकरललनभास्वद्वीणया त्वं श्रुतिस्व-
स्वरलहरि-विलासं देवि ! विश्वं विधत्स्व ।
स्वरधिप-विविधाशापालभास्वन्नभस्व-
न्मुखविबुधगणेशानेवमामोदयस्व ॥७३॥

(नौकाबन्धः) चित्र संख्या–४४

विमानबन्धः। चित्र संख्या–४०

विद्या विभेत्यादि श्लोकः—६९
पृष्ठम्—३५



सुराराध्येत्यादि श्लोकः—७०
पष्ठम्—३५



अश्वबन्धः चित्रसंख्या ४३

त्वरया समस्ता तन्त्रीत्यादि श्लोकः—४२

पृष्ठम्—३६

नौकाबन्धः। चित्र संख्या—४४




स्वकरललनभास्वदिन्यादि श्लोकः—७३

पृष्ठम्—३६

हे देवि ! त्वं स्वकरललनभास्वद्वीणया स्वऽरे ललनं चालनं यस्याः सा तादृशी भास्वन्ती उज्ज्वला वीणा तया श्रुतिस्व-स्वरलहरिविलासं श्रुतीनां वेदानां स्वं धनरूपः स्वरतरङ्ग-विस्तारो यत्र एवं विश्वं जगत् विधत्स्व कुरु। स्वरधिपः स्वर्गराजः इन्द्रः विविधाशापालाः नानादिक्पालाः अथच विविधाः आशाः इतर-देवानामिन्द्रत्वलाभादिविषयिकाः पालयन्तीति बहुप्रकारसुखलाभाशा-पोषकाः भास्वान् सूर्यः नभस्वान् वायुः तौ मुखे प्रधानभूते येषां ते विबुधगणेशाः सुरनेतारः तान् एवं तुल्यरूपं सर्वान् समभावेन आमोदयस्व प्रीणय। उदात्तादि-स्वरा एव वेदानां प्राणभूताः सरस्वत्या वीणया तेषां प्रकाशः सम्भवेत्। तादृ-शस्वरसम्पदा स्वर्गे मर्त्ये च सर्वेषामानन्दो भवतीति भावः। नवीनोऽयं नौका-बन्धः। लहरिनभस्वदादिशब्दैः नौकावस्तु व्यज्यते ॥७३॥

छत्रदानमनुस्मराह—

संहराद्य महातापं संसारमरुजातपम्।
मद्यमत्तस्य विद्ये ! या मम रुक् सास्यतां त्वया ॥७४॥
(छत्रबन्धः) चित्र संख्या–४५

हे विद्ये ज्ञानरूपे ! अद्य महातापम् अतीव ज्वालामयं संसाररूपमरुभूमि-सम्भूतमातपं घर्मं संहर नाशय। ज्ञानेनैव संसारोच्छेदः सम्भवति। मद्यमत्तस्य अविद्यारूपमद्येन मत्तस्य लुप्तचेतनस्य मम या रुक् पीडा सा अस्यतां निरस्यतां त्वया। तापातपसंहरणादिशब्देन छत्ररूपवस्तु व्यज्यते ॥७३॥

अतः परं सर्वतोभद्रमण्डले आवरणदेवादिपूजामनुस्मरन्नाह–

मायासार–रसायामा
याजपाक्ष–क्षपाजया।
सापाशदे देशपासा
रक्ष देवि विदे क्षर ॥७५॥
(सर्वतोभद्रबन्धः) चित्र संख्या–४६

माया अविद्या साररसः श्रेष्ठानन्दः तत्र आयामः व्याप्तिः यस्याः सा। अपिच माया अचित्, साररसः चिद्रूपः, चिदचिद्व्यापिनीत्यर्थः। या देवी अजपा हंसमन्त्ररूपा, अक्षक्षपाजया अक्षक्षपा इन्द्रिय-सम्बन्धिनी रात्रिः तमोगुण इत्यर्थः तस्या जयो यतः सा। हे पाशदे ! भवपाशच्छेदिनि ! दो य छेदे, दोधातोः क्विप् इति पाशदा तत् सम्बोधने, सा त्वं देशपासा देशपाः देशरक्षकः

आसः अधिष्ठानं यस्याः सा, विद्यास्थितिरेव भारतस्य रक्षयित्रीत्यर्थः। हे देवि त्वं (भारतं) रक्ष, विदे ज्ञानाय क्षर एहीत्यर्थः। रसध्वाप्तत्वात् क्षरणं नासङ्गतम् ॥७५॥

इदानीमर्द्धभ्रमकं नाम सर्वतोभद्रप्रायं मण्डलविशेषं स्वाङ्गदेवता-पूजास्थानं मन्वान आह—

माता न मायया बाध्या
तारवादन-कारवा ।
नवा सुधा-मात्रकाया
मादधारान्त्वमानय ॥७६॥

(अर्द्धभ्रमकम्) चित्र संख्या–४७

माता वाग्देवी न मायया बाध्या, जगत्पालयितृत्वात् मातृत्वम्, मायाधीश्वरीति न मायाधीना। तारवत् रौप्यवत् शुद्धमौक्तिकवद्वा यद् वादनं वाद्यं तत्र कारवं विलिप्तत्वं यस्याः सा। अथवा तादृशवादने यः कारः क्रिया तं वापयति मुखेना-प्नोतीतिव ।धातोः डप्रत्ययः स्त्रीत्वादाप्। नवा तरुणी, सुधामात्रकाया पीयूषमय-शरीरा त्वं मादधाराम् आनन्दप्रवाहम् आनय जनयेत्यर्थः। (वृ रादिवाधातोः वापयतीति रूपम्) प्रथम पादे विरोधाभासः। ततः काव्यलिङ्गालङ्कारः ॥७६॥

ततो होमकर्मसाधनाय मण्डलमभ्यगतं विविडितचक्रं षडरचक्रं द्विचतुष्कचक्रञ्च चिन्तयन्नाह–

भारती रमतामङ्ग रक्षन्ती महिताङ्गभा ।
भानुलक्षन्त्विषारभ्य सा हिमांशुमयी शुभा ॥७७॥

(विविडितचक्रबन्धः) चित्र संख्या—४८

भारती वाग् अङ्ग पुनश्च (पुनरर्थकः अङ्गशब्दः अव्ययो वर्तते) रक्षन्ती जगदित्यर्थः रमतां खेलतु। महिताङ्गभा महिता पूजिता अङ्गभा तनुदीप्तिः यस्याः सा। तस्या अङ्गभा एव ज्ञानदीप्तिः, अतः पूजितत्वं तस्याः। सा त्विषा कान्त्या भानुलक्षम् आरभ्य विकास्य इत्यर्थः। हिमांशुमयी चन्द्रवत् स्निग्धा अतएव शुभा मङ्गलमयी। विरोधाभासः। अतीव तेजस्वित्वेऽपि न सन्तापदायिनीत्यर्थः ॥७७॥

विद्याधीश्वरवक्षसि स्थितिमती दीनेऽपि या सौख्यदा
यल्लावण्यलवप्रलीनतिमिरा जागर्ति सर्वावनिः ।

छत्रबन्धः। चित्र संख्या—४४

संहराद्य महातापमित्यादि श्लोकः—७४
पृष्ठम्—३७

सर्वतोभद्रम्                                    चित्रसंख्या ४६

|   | १ | २ | ३ | ४ | ५ | ६ | ७ | ८ |   |
|---|---|---|---|---|---|---|---|---|---|
| १ | मा | या | सा | र | र | सा | या | मा | १ |
| २ | या | ज | पा | क्ष | क्ष | पा | ज | या | २ |
| ३ | सा | पा | श | द्दे | द्दे | श | पा | सा | ३ |
| ४ | र | क्ष | द्दे | वि | वि | द्दे | क्ष | र | ४ |
| ५ | र | क्ष | द्दे | वि | वि | द्दे | क्ष | र | ५ |
| ६ | सा | पा | श | द्दे | द्दे | श | पा | सा | ६ |
| ७ | या | ज | पा | क्ष | क्ष | पा | ज | या | ७ |
| ८ | मा | या | सा | र | र | सा | या | मा | ८ |
|   | १ | २ | ३ | ४ | ५ | ६ | ७ | ८ |   |

मायासारेत्यादि श्लोकः—७५

पृष्ठम्—३७

अर्धभ्रमकबन्धः। चित्र संख्या—४७

| मा | ता | न | मा | प्र | या | बा | ध्या |
|---|---|---|---|---|---|---|---|
| ता | र | वा | द | न | का | र | वा |
| न | वा | सु | धा | मा | त्र | का | या |
| मा | द | धा | रा | न्व | मा | न | य |
|  |  |  |  |  |  |  |  |

माता न माययेत्यादि श्लोकः—७६
पृष्ठम्—३८

त्रिविडित चक्रबन्धः। चित्रसंख्या- ४८



भारती रमताभित्यादि श्लोकः—७७
पृष्ठम्—३८

जम्भारेरपि दम्भहा प्रतिजनं सास्वाद्य सारं रसं
संसारे विषमायती विजयते दात्रीह निःश्रेयसम् ॥७८॥

(षडरचक्रबन्धः) चित्र संख्या–४९

विश्वाधीश्वरस्य जगत्पतेः नारायणस्य वक्षसि स्थितिमती स्थितापि या दीनेऽपि दीने अदीने च जने सौख्यदा सुखदायिनी। यल्लावण्यलवेन यदीयकान्तिकणेन हेतुना प्रलीनतिमिरा नष्टान्धकारा समग्रा धरणी आर्वात्ति प्रकाशते। जम्भारेः इन्द्रस्यापि दम्भहा दर्पनाशिनी, वाग्देव्या आराधनाधीन इन्द्रोऽपि। सा प्रतिजनं सारं रसं श्रेष्ठमानन्दम् आस्वाद्य पाययित्वा, विषमा आयतिः उत्तरकालो यस्य तादृशे संसारे निःश्रेयसम् अपवर्गं दात्री ददाना सती विजयते ॥७८॥

तामसभ्रमरश्रेणी यत्पादाब्जरुचा शुचिः।
तामासन्नां मखे श्रेष्ठां यजे दानरुचिं शुभाम् ॥७९॥

(द्विचतुष्कपत्रबन्धः) चित्र संख्या–५०

तामस-भ्रमरश्रेणी तमोमयाः कृष्णवर्णा ज्ञानरहिताश्च भ्रमरा भृङ्गा लम्पटाश्च तेषां श्रेणी यस्याः पादाब्जकान्तियोगेन शुचिः शुभ्रा अथच पवित्रा भवति। श्रेष्ठां तां मखे यज्ञे आसन्नां सन्निहितां शुभां दानरुचिं दानाय वरदानाय रुचिः अभिलाषो यस्याः सा ताम्। यजे अर्चयामि। तद्गुणालङ्कारः ॥७९॥

इदानीं विद्याविद्ययोरैक्यभावनया स्मृताया आद्यविद्यायाः परिकरान् मुण्डखड्गधनुरादीन् विद्यास्तुतिमयेन बन्धनिचयरूपेण समुपस्थायोपहरति–

देही देहीति वचनं मनसा नमनञ्च न।
देवि कृत्वापि दप्तस्ते देयां सम्पदमश्नुते ॥८०॥

(मुण्डबन्धः) चित्र संख्या–५१

हे देवि! दृप्तः गर्वितः देही पुरुषः देहि इति वचनं मनसा नमनं वाचिकं मानसं च प्रणामं न कृत्वापि ते तव देयां सम्पदं कृपासम्पत्तिम् अश्नुते प्राप्नोति। नास्तिकोऽपि तव दयाधिकारी भवति। एवमहैतुकी दया तस्याः। मुण्ड-बन्धेन व्यङ्ग्यं मुण्डदानम्, अन्तर्यागे शिरःस्वसहस्रारे देव्याराधनं–मुण्डदानस्य गूढार्थः प्रस्तुतः। विभावनालङ्कारः ॥८०॥

देहि ज्ञानमसिं काममजं कृन्तामि शान्तिदे।
देवि त्वं मम मोहाख्यं महिषञ्च मखे जहि ॥८१॥

(खड्गबन्धः) चित्र संख्या—५२

हे देवि शान्तिदे ! ज्ञानरूपमसिं देहि, कामरूपमजं छागं कृन्तामि छेदयामि। मम मोहारूपम् अज्ञाननामकं महिषञ्च त्वं मखे पूजायामे जहि घातय। आद्यविद्याया महिषमर्दिनीरूपेण महिषघातः प्रसिद्धः। एतेनान्तर्यागे कामनाशरूपबलिदानस्य गूढार्थो व्याख्यातः। खड्गबन्धः श्लोकेनैव व्यञ्जितः। रूपकालङ्कारः ॥८१॥

बलिदानाय च्छागमुपहरंश्छागबन्धं प्रस्तौति—

भव मे भवमेनादन्मेधे मेधेऽप्यमेधसः ।
वेदासिदा वदान्या वा वदान्या वाक्त्वया बिना ॥८२॥

(यमकः, छागबन्धश्च) चित्र संख्या—५३

हे मेधे सरस्वति ! अमेधसोऽपि ज्ञानहीनस्यापि मे भवमेनादमेधे भवः संसारस्तद्रूपो यो मेनादश्छागः तस्य वधे वेदासिदा भव। वेदः ज्ञानं तद्रूपोऽसिः तं ददातीति ज्ञानखड्गप्रदा भव। हे वाक् त्वया बिना अन्या वदान्या दानशीला अस्ति वेति वद। नान्या काप्यस्तीति भावः। अलङ्कारौ रूपकयमकौ। मेनादशब्देन छागबन्धो व्यङ्ग्यः। असनं मे बसनं मे जाया मे तनय-बन्धुवर्गो मे। इति मे मे कुर्वाणं कालवृको हन्ति पुरुषाजम् इति प्राचीनश्लोकस्मरणात् ॥८२॥

खड्गान्तरमुपहर्तुं प्रस्तौति

साधक-स्वान्तचषके तत्त्वरूपां सुधां मुदा ।
दातुं कुम्भकराम्भोजा भ्राजसे त्वां भजेऽञ्जसा ।
सान्द्रचान्द्रकराभे मां तमसा मोचयैनसा
सानुकम्पासि भव मे भव-खण्डनसिद्धिदा ॥८३॥

(खड्गबन्ध प्रकारान्तरम्) चित्र संख्या—५४

साधकानां स्वान्तं हृदयं तद्रूपं चषकं पानपात्रं तत्र तत्त्वरूपां सुधां मुदा दातुं त्वं कुम्भकराम्भोजा घटशोभितकरपद्मा भ्राजसे शोभसे। अतः अञ्जसा अद्धा त्वां भजे। हे सान्द्रचान्द्रकराभे ! निविडज्योत्स्नाप्रभे ! मां तमसा तमोरूपेण एनसा पापेन प्रबोध्यकर्त्री मोचय त्वाजय। त्वं सानुकम्पासि सदयासि मे भवखण्डनसिद्धिदा जन्मोच्छेदसिद्धिदायिनी भव। रूपकालङ्कारः। सान्द्रचान्द्रकराभ–खण्डनपदव्यङ्ग्यः खड्गबन्धः ॥८३॥

द्विचतुष्कचक्रबन्धः। चित्र संख्या—५०

तामसभ्रमरश्रेणीत्यादि श्लोकः—७९
पृष्ठम्—३९

इदानीं महिष-बलिदानाय महिषबन्धमुपक्रमते—

का सरोजरोपिताङ्गी कमलासनलासिनी
नीरजीकुरुते भूमिमिता भूरिकृपोदका ॥८४॥

(महिषबन्धः) चित्र संख्या—५५

सरोजे पद्मे रोपितं स्थापितम् अङ्गं यस्याः सा, कमलासने ब्रह्मणि लासिनी शोभमाना। भूमिं पृथिवीं चित्तभूमिं वा इता प्राप्ता सती भूरिकृपोदका अतीव दयार्द्रा सती नीरजीकुरुते रजोगुणरहिताम् अथच ज्ञानपद्मविकासयुतां कुरुते। स्वयं पद्मवासिनी पद्मयोनिजा चेति तत्कृतं पद्मविकासनं कृपा-जलाप्लुतभूमौ सम्भवतीति भावः। नवीनोऽयं महिषबन्धः। 'कासर' शब्दप्रतीकेन भूरिजलद्वारा पंकिलीकरणार्थसूचनया च महिषबन्धो व्यञ्जितः॥८४॥

अस्त्रपूजाप्रकरणमुपलक्ष्य धनुर्बाणबन्धं तनुते—

वाणी नमत्कोटि-गुणानुबन्ध-
न्धत्ते रुचिं स्वां कमले च बाणी।
कुशेशयान्तःक्षय-सन्धताञ्च
प्रवीणतां पाणिगताङ्गगम्याम् ॥८५॥

(धनुर्बाणबन्धः) चित्र संख्या—५६

वाणी वाग्देवी बाणी (बाणः अस्यास्तीति बाणधारी पुरुषः) च नमत्कोटि-गुणानुबन्धं नमत्सु पुरुषेषु कोटिगुणयोजनं धत्ते करोति। पक्षे नमत्कोटौ धनुषि गुणानुबन्धं ज्यायोजनां धत्ते करोति। कमले पद्मे स्वां रुचिं निजां शुभ्रद्युतिं धत्ते विदधाति, तदुपरि स्थितत्वात्। पक्षे कमले हरिणविशेषे स्वां रुचिम् अभिलाषं हननाय धत्ते। कुशेशयान्तःक्षयसन्धतां कुशेशयं पद्मं तस्य अन्तः अभ्यन्तरे क्षयः वासः तत्र सन्धताम् आग्रहमिति भावः धत्ते। पक्षे कुशेशयाः सारसपक्षिणः तेषाम् अन्तः प्राणानां क्षयः नाशः तत्र सन्धा लक्ष्यं यस्य स तस्य भावः तत्तां धत्ते। पाणिगताङ्गगम्यां प्रवीणताम्, पाणिगतां हस्तनिष्ठां नगम्यां गन्धर्वसाधारणी प्रवीणतां प्रकृष्टा वीणा यस्याः सा तत्तां वीणावादनकौशलमित्यर्थः धत्ते, पक्षे पाणिगतं यदङ्गं हस्ताग्रगता अंगुलयः ताभिर्गम्यां लभ्यां प्रवीणतां कुशलतां धत्ते। धनुर्धराणामविरतबाणयोजनया अंगुलिचालनायां पाटवं भवति। श्लेषमूलो दीपकालंकारः। श्रुतिमूचितोऽयं श्लोकविषयः। तथाहि 'प्रणवो धनुः शरो ह्यात्मा ब्रह्म तल्लक्ष्यमुच्यते। अप्रमत्तेन वेद्धव्यं शरवत् तन्मयो भवेत्' इति

(मुण्डको. २।२।४)। परैरलनुवीत्तितोऽयं बन्धप्रकारः। पक्षान्तरद्योतितार्थेन धनूरूपवस्तुनो लाभात्तद्वाबन्धव्यङ्ग्यः॥८५॥

मुद्गरास्त्रदानाय प्रस्तौति—

तव रूपाब्धिमननाद् बुधानां या सुधायते ।
वत भोगाब्धिमथनात्तत्परा मुद् गरायते ॥८६॥
(मुद्गरबन्धः) चित्र संख्या—५७

हे देवि! तवरूपसमुद्रस्य मननाद् ध्यानाद् बुधानां या मुत् प्रीतिः सुधायते अमृतवत् प्रतीयते, वत खेदे भोगः विषयः तत्सदृशः सिन्धुः तस्य मथनात् आलोडनात् अनुशीलनादित्यर्थः, तत्परा पूर्वोक्ताया मुदः परा अन्या मुत् प्रीतिः गरायते विषवत् प्रतीयते बुधानामिति भावः। समुद्रमंथनात् सुधा विषञ्च समुत्पद्येते। 'मुद् गरायते' इति वाक्ये 'मुद्गर' प्रतीकात् मुद्गरबन्धव्यङ्ग्यः। व्याघातालङ्कारः॥८६॥

अधुना तूणमुपहर्तुमीहते—

त्वन्देवि सारदा भक्तानन्दे विशारदा भव ।
ननु शेषुदयाशक्त्या तनु शेषु दयाशमौ ॥८७॥
(तूणबन्धः) चित्र संख्या—५८

हे देवि! त्वं सारदा भक्तानन्दे भक्तानाम् आनन्दविषये विशारदा विशाला भव। तेषु, तव भूमस्वरूपज्ञापनं कुरु।' भूमैव सुखम्' इति श्रुतेः। ननु शेषुदया शक्त्या शाधातोभवि क्विपि श शानं तद्वत् इषुः बाणः तं ददाति या सा शेषुदा शक्तिः तया, शेषु शाधातोः कर्त्तरि क इति शः, शेषु विद्वत्सु दयाशमौ परदुःखप्रहाणेच्छां शान्तिञ्च द्वे फले तनु विस्तारय। यथा वाणद्वारा फलयुगलमलभ्यमपि लभ्यते, तथा ज्ञानयोगेन करुणा शान्तिश्च प्राप्येते इति ध्वनिः। इषुदेति शब्दसामर्थ्यात् तूणबन्धव्यञ्जना॥८७॥

इदानीं पात्रमुपहारं दातुमिच्छन् प्रस्तौति—

श्रुतापि कृतिमातीता सितापि कृष्णमाश्रिता ।
ध्याता सकृपमाभाता हिता याकृत्रिमा मता ॥८८॥
(पात्रबन्धः) चित्र संख्या—५९

महिषबन्धः। चित्र संख्या—५५

का सरोजरोपितेत्यादि श्लोकः—८४
पृष्ठम्—४१




तवरूपाब्धिमननादित्यादि श्लोकः—८६

पृष्ठम्—४२

तूणबन्धः
चित्रसंख्या ५८



त्वन्देवि सारदेत्यत्यादि श्लोकः—५७
पृष्ठम्—४२

पाश (जाल) बन्धः। चित्र संख्या—४९

पाशबन्धः । चित्रसंख्या - ४९



श्रुतापि कुलिनैरित्यादि श्लोकः—८८
पृष्ठांकः—४२

या श्रुतापि श्रवणविषयीकृतापि कृतिमातीता कृतिनां विदुषां मा ज्ञानं तदतीता, अपारा किल विद्येति भावः। सिता शुभ्रा अपि कृष्णं कृष्णवर्णम् अथच नारायणम् आश्रिता। ध्याता सती सद्रूपं सदयं यथा स्यात्तथा आभाता प्रकाशिता भवति। बुधजनज्ञानातीतापि ध्याने मनने कृते तस्या दयोदयात् प्रकाशमाना भवतीत्यर्थः। 'यमेवैष वृणुते तेन लभ्य' इत्यादि श्रुतेः। अकृत्रिमा हिता मता स्वभावतो मङ्गलमयी, सर्वोपकारकरणाय सदार्द्रचित्तेति भावः। प्रथमार्द्धे विरोधाभासालङ्कारः। कृष्णकृत्रिमादिशब्देन पाशव्यञ्जना ॥८८॥

त्रिशूलगदास्त्रद्वयमुपहरन् प्रस्तौति–

अयि जगदघजालव्यालशूलायमाने
वितर रतविशुद्धाद्धाशु विश्वस्य शान्तिम् ।
भवभयभरहृन्नो हृत्सु हृद्यं तवैतत्
प्रतनु महिमधाम क्षेमदं मर्त्त्यमध्ये ॥८९॥

(त्रिशूलगदाबन्धः) चित्र संख्या—६०

जगतां जगज्जनानाम् अघजालं पापराशिः तद्रूपो व्यालः हिंस्रजन्तुः तस्मिन् शूलवत् आचरति या तत्सम्बुद्धौ, अयि सर्वेषां पापनाशिनि! रतविशुद्धा रते लीलायां विशुद्धा सत्त्वप्रधाना सती (त्वम्) आशु अद्धा तत्त्वतः विश्वस्य शान्तिं वितर। इदानीं तव लीलायां रजोऽधिकत्वं भाति तत एव यन्त्र-विज्ञानविद्याप्रधाना शिक्षा प्रचरति रणप्रवृत्तिश्च जायते यया शान्तिर्व्याहन्यते। भवभयभरहृत् संसारभयातिशयनाशि तव हृद्यं मनोज्ञम् एतत् क्षेमदं मङ्गलमयं महिमधाम विभूतीनां तेजः मर्त्तमध्ये नश्वरजगन्मध्ये नः अस्माकं हृत्सु प्रतनु विस्तारय। यथा विभूतिप्रदर्शनेन भगवानर्जुनहृदये संशयान्तं विदधे, तथा त्वमपि तव महिमप्रकाशनेनास्मन्मनःसु निर्वृतिं वितरेति भावः। शूलशब्दव्यङ्ग्योऽयं त्रिशूलबन्धः ॥८९॥

गदान्तरं निधातुकामः साधक आह—

नित्या निधिनिभा भासि सिन्धौ सिद्धा सितच्छविः ।
विद्ये विश्वविदे देवि ! विधिविष्णु-विमोहिनि ॥९०॥

(गदाबन्धान्तरम्) चित्र संख्या—६१

हे विधिविष्णुविमोहिनि! विद्ये! (त्वं) नित्या क्षयोदयरहिता, निधिवत् पद्मशङ्खादिवद् भासि। तव सितच्छविः शुभ्रकान्तिः सिन्धौ क्षीरसमुद्रे सिद्धा ख्याता।

त्वं विश्वविदे विश्वेषां जनानां विदे ज्ञानाय भासि प्रकाशसे। सप्तशतीग्रन्थस्योत्तरचरिते वर्णिता सरस्वती देवी ब्रह्माणी वैष्णवी च भूत्वा ब्रह्मविष्णुप्रमुखानां देवानां मोहं विस्मयाधिक्यजनितं जनयामासेति तत्सम्बोधनम्। ततश्च विश्वरक्षा सम्भूतेति भावः। 'छवि:' इति सविसर्गं वि: पदेन सह विधे इति विसर्गहीन 'वि' वर्ण-ग्रहणं न दोषाय। 'सविसर्गाविसर्गयोः स्यादभेदेन कल्पन'मिति नियमात् ॥९०॥

सम्प्रति नागपाशमुपहर्त्तुमुपक्रमते—

त्वं हि वाणी नदद्वीणापाणिर्दर-निवारिणी।
भोगसारादहिस्फारात् संसारान्नोऽव तारिणी ॥९१॥

(फणिबन्धः) चित्र संख्या—६२

त्वं वाणी नदद्वीणापाणिः शब्दायमानवीणाधारिणी, भयवारिणी तारिणी। भोगः विषयसेवनं सर्पदेहश्च स एव सारः यत्र तादृशात् अहिस्फारात् राहुवत् विकटात् अथच सर्पवत् आयतात् संसारात् नः अस्मान् अव रक्ष। सर्पा हि मधुरध्वनिवश्याः। वीणाध्वनिना सर्पमिव संसारं वशीकृत्यास्मान् उद्धरेति भावः। अहिभोगशब्दव्यञ्ज्यः फणिबन्धोऽयम् ॥९१॥

पुनरपि नागपाशान्तरं प्रदातुमवतरति—

यद्वाचो विश्वनन्दत्पदकमलमिलद्वासवामुक्तमुक्ता-
युक्तालंकारभासस् सुविततसितता शुक्लपक्षं जहास।
तच्चन्द्रो मुह्यदन्तर्लसित-शितकलंकः स आनम्य शुद्धिं
कर्तुं जज्ञे मुहुश्च प्रपदपदयुतो दत्तरक्षालमम्बा ॥९२॥

(सर्पबन्धान्तरम्) चित्र संख्या—६३

वाचो वाग्देव्याः विश्वानन्दकरपदकमलयोः मिलतो नमतो वासवस्य देवराजस्य आमुक्तानां तेन धृतानां मुक्ताविशिष्टालंकाराणां भासः द्युतेः विस्तृतशुभ्रता यत् यतः शुक्लपक्षं जहास पराजिग्ये। तत् तस्माच्चन्द्रः मुह्यदन्तः मूर्च्छापन्नचेता बभूव क्रोधादिति भावः। प्राक् रजसाक्रान्तस्य ततस्तमोयुक्तस्य तस्य कृष्णवर्णः कलङ्कः विशेषेण प्रकाशितोऽभवत्। तस्य कलङ्कप्रकाशेन स (लज्जितः सन्) आत्मनः शुद्धिं कर्त्तुं मुहुः देव्याः प्रपदे पदाग्रभागे पदं स्थानं तद्युतः जज्ञे जातः। पदाग्रे नखरूपेण स्थानं प्राप्तः। अम्बा माता अलं पर्य्याप्तं यथा स्यात् तथा दत्तरक्षा। चन्द्रः वाग्देव्या नखरूपेणाद्यापि राजत इति ध्वनिः। प्रतीयमानोत्प्रेक्षालङ्कारः सुविततसिततेतिपदेन सर्पो व्यञ्ज्यश्च ॥९२॥



अयिजगदघजालेत्यादि श्लोकः—८९
पृष्ठांकः—४३




नित्यानिधिनिभेत्यादि श्लोकः—९०
पृष्ठांक—४३

सर्पबन्धान्तरम् । चित्रसंख्या - ६३



यद्वाचो विश्वनन्ददित्यादि श्लोकः—९२
पृष्ठांकः—४४

साम्प्रतमंकुशास्त्रदानमनुरुध्याह–

भवारामरतोन्मत्तं मनो मम मतङ्गजम् ।
मह्यं नियन्तुं देहि त्वं ज्ञानांकुरघनांकुशम् ॥९३॥

(अंकुशबन्धः) चित्र संख्या—६४

भवः संसारः तद्रूप आरामः उपवनम् एतस्मिन् रतोन्मत्तं कामक्रीडासक्तं मम मनोमतङ्गजं मनोरूपं गजं नियन्तुं नियन्त्रयितुं मह्यं ज्ञानांकुररूपं घनांकुशं लोहमयाङ्कुशं देहि। अङ्कुशशब्देनैवाङ्कुशबन्धः सूच्यते। तत्त्वज्ञानाविर्भावित एव अज्ञाननाशो भवतीति ज्ञानांकुरप्रार्थनयास्य सूक्ष्माग्राङ्कुशतुल्यत्वं विवक्षितम्। रूपकालङ्कारः ॥९३॥

अतः परं मन्त्राक्षरजपरूपं द्व्यक्षरबन्धमाचष्टे–

सा संसारेऽसारे सारा राससुरासरसासारा ।
सौरी राः सुरसारे ससारसे सरसि सारासा ॥९४॥

(द्व्यक्षरबन्धः)

असारे स्थिरांशरहिते संसारे (अस्मिन्) सा देवी सारा श्रेष्ठा। राससुरासरसा-सारा—रासः शब्दः तस्य अथवा रसः शृङ्गारादिः, तस्य सम्बन्धिनी या सुरा मदिरा प्रीतिरित्यर्थः। तस्याः सरसः स्निग्धः आसारः धारासम्पातो यस्याः सा। सा सौरी सूर्यसम्बन्धिनी राः धनं ज्योतिर्मयत्वात् सूर्यस्यापि प्रभा सा देवी। सुरसारे सु शोभनः रसः जलं तम् ऋच्छति प्राप्नोति इति सुरसारं तस्मिन् तादृशे ससारसे पद्मयुक्ते च सरसि सारवत् नवनीतवत् आसः अधिष्ठानं यस्याः सा। सा पात्विति शेषः। रूपकोपमयोः संसृष्टिः ॥९४॥

पूजान्ते योषिदाभरणादिदानं प्रहेलिकाद्वयसन्निवेशमुखेन दर्शयन्नाह–

सुपर्व-कृतसन्दर्भे सारस्वतपदाश्रिते ।
शुचिदीप्ते मखे भाति निर्वेदीन्दोर्हि मण्डलम् ॥९५॥

(च्युतदत्ताक्षरा प्रहेलिका)

अत्र नदच्युतो मो दत्तः, मखे इत्यत्र नखे इति युक्तम्। सुपर्वणि शोभन-पर्वदिने कृतसन्दर्भे कृतसज्जे सारस्वतपदाश्रिते सरस्वतीनदीक्षेत्रगते शुचिदीप्ते अग्निना उज्ज्वलीकृते मखे यज्ञे इन्दोः चन्द्रस्य मण्डलं पूजास्थानं निर्वेदि वेदी-रहितं हि निश्चयेन भाति। तस्मिन् यज्ञे चन्द्रस्य पूज्यत्वेऽपि चन्द्रार्थं वेदीनिर्माणं

न दृश्यते। इति चित्रम् दूरयेकोऽर्थः। वस्तुतस्तु सुपर्वभिः देवैः कृतसन्दर्भे अलक्तादिना सज्जीकृते सारस्वतपदाश्रिते वाग्देवतायाश्चरणस्थे नखे भाति सति इन्दोर्मण्डलं चन्द्रबिम्बं निर्वेदि निर्वेदयुक्तं हि। निर्वेदः स्वावमाननम् इति हेमचन्द्रः। शुचिदीप्ते शुचिः अग्निः शुभ्रवर्णश्च, शुचिना दीप्ते पक्षान्तरे शुचिश्च दीप्तश्चेति तस्मिन्, नखविशेषणम्। चन्द्रापेक्षया वाग्देवीपदनखद्युतिरधिकेति चन्द्रस्य निर्वेदकारणम्। व्यतिरेकव्यङ्ग्यः ॥९५॥

> येन येन पदे वाचोऽलक्तरेखेन रञ्जिते।
> स्वस्थेन तेन तेनेह समृद्धिरतिदुर्लभा ॥९६॥
> (क्रियाकर्त्तृगुप्तिप्रहेलिका)

येन येन जनेन वाचो देव्याः पदे चरणे अलक्तरेखेन रञ्जिते यावकरागदानेन सज्जिते, इह स्वस्थेन तेन तेन अति दुर्लभा समृद्धिरिति क्रियागुप्तिः। येन येनेति अनिर्दिष्टतया समुल्लेखेन स्वर्गमर्त्यपातालवासिना केनचिद् भाव्यमिति कर्त्तृगुप्तिः। वस्तुतस्तु लक्तरेखेनेत्यत्र रक्तलेखेनेति रलयोरभेदात् अनुरक्तदेवेन (लेखशब्दो देववाचकः) कर्त्रा येन येन वाचो देव्याः पदे रञ्जिते, अथवा रक्तलेखेन अलक्तरेखेन इति श्लेषः, तेन रञ्जिते, स्वस्थेन स्वर्गस्थितेन तेन अतिदुर्लभा समृद्धिः तेने विस्तारिता, लब्धा। 'ह' इति पादपूरणे ॥९६॥

इदानीमुपचारदानान्ते स्तुतिगीतिमारभते।

> गौरजलज-गौरवचय-चौरचरणलोभा
> न्मलितमुग्ध-मधुप-विबुध-लब्धललितशोभा।
> राजत इह राजत-गिरि-राज-तरुणवेशा
> सुन्दरघन-चिन्मय-मनु-वाङ्मयतनुरेषा ॥९७॥

प्रथमांशःसुगमः। मनुः मन्त्रः, स च ज्ञानमयः, सुन्दरी च घनचिन्मयमनुस्वरूपा च एवम्भूता, वाङ्मयं शास्त्रं तदेव तनुर्यस्याः सा रजतमय-गिरिराजवत् समुज्ज्वलवेशा राजते ॥९७॥

> शुभ्रोज्ज्वले शतदले तव पादपद्म-
> शोभाधरे मधुरिमा भुवनप्रकाशे।
> उषा यथा किशलये तव देवि! सद्यो
> भासे च से शशिकला विकला सकाशे ॥९८॥

अङ्कुशबन्धः। चित्र संख्या—६४

अङ्कुशबन्धः
चित्रसंख्या - ६४

भवारामरतोम्मत्तमित्यादि श्लोकः—९३
पृष्ठांकः—४५

(संस्कृतवङ्गभाषाश्लेषः)

भुवनस्य प्रकाशो यतः सा तत्सम्बोधनम्, हे भुवनप्रकाशे ! तव पादपद्म-शोभाधरे अतएव शुभ्रोज्ज्वले शतदले पद्मे मधुरिमा, किसलये नवपल्लवे यथा ऊषा भाति तद्वत् । हे देवि ! तव भासे तेजसि वर्त्तमाने सति तव सकाशे निकटे आकाशस्था शशिकला सद्यो विकला विह्वला च । वङ्गभाषायां-शुभ्रोज्ज्वले शतदले, तव पादपद्मं शोभा वहति, तव मधुरिमा भुवनं प्रकाशयति । तव सकाशे शशिकला विकला च'खे नयनयोः भासे भाति । इयं वङ्गभाषायां चतुर्दशपदी कविता । संस्कृते च वसन्ततिलकं छन्दः ।

अमलकमलोपरि स्फुरति तव कोमलं
चरणयुगमरुणकरताम्रम् ।
ललित-निहितं हितं गलितकरुणामृतं
प्रणतजनभृङ्गगणकाम्यम् ॥९९॥

मन्दमतिमानसेऽप्यन्धतमसावृते
ज्योतिरसि परममभिरामम् ।
शशिशकल-शोभिता शिशिरगिरिसम्मिता
शान्तिरसि तप्तहृदि कामम् ॥१००॥

वहसि करपल्लवे कलमुरलवल्लकीं
मल्लिचयचारुमवदाताम् ।
नयसि जडचित्तमपि नित्यरसमाधुरीं
प्रणवमयनादसहजाताम् ॥१०१॥

त्वमसि चिरसुन्दरं माङ्गलिकमन्दिरं
श्रुतिनियमनीतिकृतवासा ।
अमरमनुजासुरा ज्ञानलवभासुराः
के न वद जगति तव दासाः ॥१०२॥

सान्द्रसुखचिन्मयी तव वदन-चन्द्रिका
नन्दयति विश्वपति-चित्तम् ।
दिशसि परनिर्वृतिं रचयसि च संसृतिं
संहरसि निखिलमपि कृत्यम् ॥१०३॥

जननि वाणि ! करवाणि नमस्ते
त्वं गतिरेका जगति समस्ते ।
अतिमधुरोज्ज्वल-कोमलकान्ति-
स्त्वमसि विश्वजनमानसशान्तिः ॥१०४॥

मधुरविपञ्चीध्वनि-हृतजाड्ये
जयति कुन्दकुसुमाभरणाढ्ये ।
सितचरणच्छविजित-रविचन्द्रा
जगदुद्भासयसि च निस्तन्द्रा ॥१०५॥

मुग्धदुग्धमय-सिन्धुतरङ्गे
शुभ्रकमलदल-परिलसदङ्गे ।
रुचिर-शुचिस्मितरचित-सिताशे
कुरु करुणामयि ! मयि चिरदासे ॥१०६॥

कुन्दरदोज्ज्वल-सुन्दरवदने
नन्द देवि ! मम मानस-सदने ।
विबुधवृन्दचिरवन्दित-चरणे
देहि दयालवमापत्तरणे ॥१०७॥

(कलितललितवीणा ज्ञानदानप्रवीणा
विकचकमललीना या महिम्ना नवीना ।
अतुलविशदवर्णाभ्यर्ण-सञ्चारि-हंसा
लसतु शशिवतंसा सारदा प्रत्यहं सा ॥१०७॥)

स्तुत्यनन्तरं क्षमस्वेति विसर्जनविषये शङ्ख-मुरजध्वनिमुपक्रमते—

कलावत्सल-भावाढ्या
राकासा रसभाविका ।
का विभा सरसाकारा
कलावत्सल-शीतला ॥

(शङ्खबन्धान्तरम्) चित्र संख्या—६५

शङ्खबन्धान्तरम्। चित्र संख्या—६५

कलावत्सलेत्यादि श्लोकः-
पृष्ठांकः—४८

कलासु नृत्यगीतादिषु स्निग्धभावयुक्ता राकामस्यतीति क्षिपतीति पूर्णेन्दुतिथेरपि अधिकसमुज्ज्वला रसोत्पादिका च। कलावान् चन्द्रः सलं जलं तदुभयवत् शीतला रसलहिताकारसमेता का विभा? सारस्वतं महः इत्यर्थः। विसर्जनकाले तेजोमयरूपं साधकैर्भाव्यम्।

क्षमतां मा हिता मन्तुं
रमतां हृद्गता मम।
ममतां दृश्यतानस्य
भ्रमतां माहिता नय ॥१०८॥

(मुरजबन्धः) चित्र संख्या—६६

(तेजोमयी देवी सरस्वती) हिता मङ्गलमयी मा माता मन्तुम् अपराधं क्षमतां सहताम्। मम हृत् हृता गता सती रमताम्। माहिता मानिता पूजिता सती (माह् माने इति माह् धातुः) दृश्यतानस्य इदन्त्वरूपेण पुरः प्रतीयमानस्य प्रपञ्चस्य ममतां चिदचिद्भेद-बोधजननीं मायां भ्रमताम्-भ्रमविषयतां नय प्रापय। सारस्वतोपासनया चिदचिदुभयपर्यालीकसत्ता-बोधं जनयन्ती ममान्तरं प्रविशेति विसर्जनम्।

सारस्वतशतकमिदं सचित्रकाव्यं समाप्तिमायातम्।
शाके वसुमुनिशक्रप्रमिते विद्यादयाभ्युदयात् ॥
यद्यपि भवेदवद्या कृतिरेषा कृतिमतां तु नोपेक्ष्या।
सारस्वतरसमिलिता न शीलिता किं सपङ्का भूः ॥

सरस्वती नाम नदी तस्या जलमवगाहमानस्य पुण्यकामस्य पङ्कमर्दनं यथा भवति तथा निन्द्याप्येषा कृतिः सरस्वती-गुणवर्णनरसयोगवशान्नोपेक्ष्या कृतिना मनु शीलनीया। इति ग्रन्थकर्तुः सविनयप्रार्थनम्।

स्वच्छन्दासिलतर्ककर्कशवनी-सञ्चार-पञ्चानन—
श्री पञ्चाननतर्करत्नचरणान् विद्यागुरून् जन्मदान्।
तानानम्य सभक्ति तत्करुणया सिक्तोऽन्यत्साङ्कृतां।
श्रीसारस्वत-चित्रपद्यशतकं श्रीजीवशर्मा श्रिया ॥
वङ्गेषु भट्टपल्ली सुमनोभरसुरभिता कापि वल्ली ॥
तत्राकृत धृतजीवः श्रीजीवो गौतमस्तदिदम् ॥

इति सारस्वतशतकं समाप्तम्। ओं तत्सत् ॥

॥ श्रीरस्तु ॥

मुरजबन्धान्तरम्। चित्र संख्या—६६



भ्रमतां मा हिता मन्तुमित्यादिश्लोकः—१०८
पृष्ठांकः—४९

# शुद्धिपत्रम् ।

| अशुद्धिः | शुद्धिः | पृष्ठाङ्कः |
|---|---|---|
| मूले— | | |
| नृन् नियोज्य | नृन् नियोज्य | ३ (२ श्लोके) |
| मौलिभालग्न- | मौलभालग्न- | ३१ (६३ श्लोके) |
| दासाना | दासानां | ३६ (७१ श्लोके) |
| शुमा | शुभा | ३३ (७७ श्लोके) |
| न्मलित- | न्मिलित | ४६ (१७ श्लोके) |
| पादपद्य | पादपद्म | ४६ (१८ श्लोके) |
| टीकायाम्— | | |
| सभमसनाशकः | सन्तमस नाशकः | ३६ (७१ श्लो. टीका) |
| काव्यलिङ्काल | काव्यलिङ्गाल | ३८ (७६ ,, ) |
| कृतिवानुशीलवीया | कृतिनामनुशीलनीया | ४९ (२१।२२ पंक्तौ) |
| भूमिकायाम्— | | |
| बृर्हती | बृंहती | ७ (१२ पङ्क्तौ) |
| स्छन्दो | श्छन्दो | ८ (८ ,, ) |
| Introduction of | Introduction to | १६ (foot note) |
| नेषां | तेषां | २३ (१३ पङ्क्तौ) |
| यत्त | यत्र | २४ (६ ,, ) |